(६) आनन्दमयाधिकरणम्

12 ॐ आनन्दमयोऽभ्यासात् ॥ १२ ॥

13 ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

14 ॐ तद्धेतुव्यपदेशाच्च ॥ १४ ॥

15 ॐ मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

16 ॐ नेतरोऽनुपपत्तेः ॥ १६ ॥

17 ॐ भेदव्यपदेशाच्च ॥ १७ ॥

18 ॐ कामाच्च नानुमानापेक्षा ॥ १८ ॥

19 ॐ अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

(७) अन्तर(स्थत्वा)धिकरणम्

20 ॐ अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

21 ॐ भेदव्यपदेशाच्चान्यः ॥ २१ ॥

(८) आकाशाधिकरणम्

22 ॐ आकाशस्तल्लिङ्गात् ॥ २२ ॥

(९) प्राणाधिकरणम्

23 ॐ अत एव प्राणः ॥ २३ ॥

(१०) ज्योतिरधिकरणम्

24 ॐ ज्योतिश्चरणाभिधानात् ॥ २४ ॥

(११) गायत्र्यधिकरणम्

25 ॐ छन्दोभिधानान्नेति चेन्न
तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥

26 ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

27 ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२७॥

(१२) अन्तर्यामि(पादांत्य)(अन्तिम)प्राणाधिकरणम्

28 ॐ प्राणस्तथाऽनुगमात् ॥ २८ ॥

29 ॐ न वक्तुरात्मोपदेशादिति
चेदध्यात्मसंबंधभूमा ह्यस्मिन् ॥ २९ ॥

30 ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

31 ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्न
उपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

॥ इति प्रथमाध्यायस्य प्रथमः पादः ॥

---

## II अन्यत्रप्रसिद्धलिंगात्मकशब्दसमन्वयपादः

(१) सर्वत्रप्रसिद्धा(सर्वगतत्वा)धिकरणम्

32 ॐ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

33 ॐ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

34 ॐ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

35 ॐ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

36 ॐ शब्दविशेषात् ॥ ५ ॥

37 ॐ स्मृतेश्च ॥ ६ ॥

38 ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न
निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

39 ॐ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

(२) अत्तृत्वाधिकरणम्

40 ॐ अत्ता चराचरग्रहणात् ॥ ९ ॥

41 ॐ प्रकरणाच्च ॥ १० ॥

(३) गुहाधिकरणम्

42 ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

43 ॐ विशेषणाच्च ॥ १२ ॥

(४) अन्तराधिकरणम्

44 ॐ अन्तर उपपत्तेः ॥ १३ ॥

45 ॐ स्थानादिव्यपदेशाच्च ॥ १४ ॥

46 ॐ सुखविशिष्टाभिधानादेव च ॥ १५ ॥

47 ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

48 ॐ अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

(५) अन्तर्याम्यधिकरणम्

49 ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

50 ॐ न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

51 ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

(६) अदृश्यत्वाधिकरणम्

52 ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

53 ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

54 ॐ रूपोपन्यासाच्च ॥ २३ ॥

(७) वैश्वानराधिकरणम्

55 ॐ वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

56 ॐ स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

57 ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषविधमपि चैनमधीयते ॥ २६ ॥

58 ॐ अत एव न देवता भूतं च ॥ २७ ॥

59 ॐ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

60 ॐ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥
61 ॐ अनुस्मृतेर्बादरिः ॥ ३० ॥
62 ॐ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥
63 ॐ आमनन्ति चैनमस्मिन् ॥ ३२ ॥

॥ इति प्रथमाध्यायस्य द्वितीयः पादः ॥

---

## III उभयत्रप्रसिद्धनामलिंगात्मकशब्दसमन्वयपादः

### (१) द्युभ्वाद्यधिकरणम्

64 ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥
65 ॐ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥
66 ॐ नानुमानमतच्छब्दात् ॥ ३ ॥
67 ॐ प्राणभृच्च ॥ ४ ॥
68 ॐ भेदव्यपदेशात् ॥ ५ ॥
69 ॐ प्रकरणात् ॥ ६ ॥
70 ॐ स्थित्यदनाभ्यां च ॥ ७ ॥

### (२) भूमाधिकरणम्

71 ॐ भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥
72 ॐ धर्मोपपत्तेश्च ॥ ९ ॥

### (३) अक्षराधिकरणम्

73 ॐ अक्षरमंबरान्तधृतेः ॥ १० ॥
74 ॐ सा च प्रशासनात् ॥ ११ ॥
75 ॐ अन्यभावव्यावृत्तेश्च ॥ १२ ॥

### (४) सदधिकरणम्

76 ॐ ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

(५) दहराधिकरणम्

77 ॐ दहर उत्तरेभ्यः ॥ १४ ॥

78 ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

79 ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

80 ॐ प्रसिद्धेश्च ॥ १७ ॥

81 ॐ इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १८ ॥

82 ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

83 ॐ अन्यार्थश्च परामर्शः ॥ २० ॥

84 ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

(६) अनुकृत्यधिकरणम्

85 ॐ अनुकृतेस्तस्य च ॥ २२ ॥

86 ॐ अपि स्मर्यते ॥ २३ ॥

(७) वामनाधिकरणम्

87 ॐ शब्दादेव प्रमितः ॥ २४ ॥

88 ॐ हृद्यपेक्षाया तु मनुष्याधिकारत्वात् ॥ २५ ॥

(८) देवताधिकरणम्

89 ॐ तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

90 ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

91 ॐ शब्द इति चेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम् ॥२८॥

92 ॐ अत एव च नित्यत्वम् ॥ २९ ॥

93 ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥

94 ॐ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

95 ॐ ज्योतिषि भावच्च ॥ ३२ ॥

96 ॐ भावं तु बादरायणोऽस्तिहि ॥ ३३ ॥

(९) अपशूद्राधिकरणम्

97 ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥३४॥
98 ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥
99 ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥
100 ॐ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥
101 ॐ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

(१०) कंपना(वज्रा)धिकरणम्

102 ॐ कंपनात् ॥ ३९ ॥

(११) जीवज्योतिर(ज्योति)धिकरणम्

103 ॐ ज्योतिर्दर्शनात् ॥ ४० ॥

(१२) अव्याकृताकाशाधिकरणम्

104 ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

(१३) सुषुप्त्यधिकरणम्

105 ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

(१४) पत्य(ब्राह्मणा)धिकरणम्

106 ॐ पत्यादिशब्देभ्यः ॥ ४३ ॥

॥ इति प्रथमाध्यायस्य तृतीयः पादः ॥



IV अन्यत्रैवप्रसिद्धनामलिंगात्मकशब्दसमन्वयपादः

(१) आनुमानिकाधिकरणम्

107 ॐ आनुमानिकमप्येकेषामिति चेन्न
शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥
108 ॐ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

109 ॐ तदधीनत्वादर्थवत् ॥ ३ ॥

110 ॐ ज्ञेयत्वावचनाच्च ॥ ४ ॥

111 ॐ वदतीति चेन्न प्राज्ञो हि ॥ ५ ॥

112 ॐ प्रकरणात् ॥ ६ ॥

113 ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ७ ॥

114 ॐ महद्वच्च ॥ ८ ॥

115 ॐ चमसवदविशेषात् ॥ ९ ॥

(२) ज्योतिर(रुपक्रमा)धिकरणम्

116 ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ १० ॥

117 ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ११ ॥

(३) नसंख्योपसंग्रहा(पंचजना)धिकरणम्

118 ॐ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥१२॥

119 ॐ प्राणादयो वाक्यशेषात् ॥ १३ ॥

120 ॐ ज्योतिषैकेषामसत्यन्ने ॥ १४ ॥

(४) कारणत्वेना(आकाशा)धिकरणम्

121 ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १५ ॥

(५) समाकर्षाधिकरणम्

122 ॐ समाकर्षात् ॥ १६ ॥

123 ॐ जगद्वाचित्वात् ॥ १७ ॥

124 ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥१८॥

125 ॐ अन्यार्थं तु जैमिनिः
प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १९ ॥

126 ॐ वाक्यान्वयात् ॥ २० ॥

127 ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २१ ॥

128 ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ २२ ॥

129 ॐ अवस्थितेरिति काशकृत्स्नः ॥ २३ ॥

(६) प्रकृत्यधिकरणम्

130 ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २४ ॥

131 ॐ अभिध्योपदेशाच्च ॥ २५ ॥

132 ॐ साक्षाच्चोभयाम्नानात् ॥ २६ ॥

133 ॐ आत्मकृतेः परिणामात् ॥ २७ ॥

134 ॐ योनिश्च हि गीयते ॥ २८ ॥

(७) एतेनसर्वेव्याख्याता(सर्वव्याख्याना)धिकरणम्

135 ॐ एतेन सर्वे(ऽ)व्याख्याता व्याख्याताः ॥ २९ ॥

॥ इति श्रीमत्कृष्णद्वैपायनप्रणीत ब्रह्मसूत्रे प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ इति प्रथमाध्यायः (समन्वयाध्यायः) ॥

---

# ॥ द्वितीयोऽ(अविरोधा)ध्यायः ॥

## I युक्ति(तर्क)पादः

(१) स्मृत्यधिकरणम्

136 ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न
अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

137 ॐ इतरेषां चानुपलब्धेः ॥ २ ॥

138 ॐ एतेन योगः प्रत्युक्तः ॥ ३ ॥

(२) न विलक्षणत्वाधिकरणम्

139 ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

140 ॐ दृश्यते तु ॥ ५ ॥

(३) अभिमान्यधिकरणम्

141 ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ६ ॥

142 ॐ दृश्यते च ॥ ७ ॥

(४) असदधिकरणम्

143 ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ८ ॥

144 ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ९ ॥

145 ॐ न तु दृष्टान्तभावात् ॥ १० ॥

146 ॐ स्वपक्षदोषाच्च ॥ ११ ॥

147 ॐ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ १२ ॥

148 ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॥ १३ ॥

(५) भोक्त्र(ापत्त्य)धिकरणम्

149 ॐ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १४ ॥

(६) तदनन्यत्वाधिकरणम्

150 ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॥ १५ ॥

151 ॐ भावे चोपलब्धेः ॥ १६ ॥

152 ॐ सत्त्वाच्चावरस्य ॥ १७ ॥

153 ॐ असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् १८

154 ॐ युक्तेः शब्दांतराच्च ॥ १९ ॥

155 ॐ पटवच्च ॥ २० ॥

156 ॐ यथा प्राणादिः ॥ २१ ॥

(७) इतरव्यपदेशाधिकरणम्

157 ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २२ ॥

158 ॐ अधिकं तु भेदनिर्देशात् ॥ २३ ॥

159 ॐ अश्मादिवच्च तदनुपपत्तिः ॥ २४ ॥
160 ॐ उपसंहारदर्शनान्नेति चेत् क्षीरवद्धि ॥ २५ ॥
161 ॐ देवादिवदपि लोके ॥ २६ ॥
162 ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २७ ॥

(८) श्रुति(शब्द)मूलत्वाधिकरणम्

163 ॐ श्रुतेस्तु शब्दमूलत्वात् ॥ २८ ॥
164 ॐ आत्मनि चैवं विचित्राश्च हि ॥ २९ ॥
165 ॐ स्वपक्षदोषाच्च ॥ ३० ॥
166 ॐ सर्वोपेता च तद्दर्शनात् ॥ ३१ ॥
167 ॐ विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३२ ॥

(९) न प्रयोजनवत्त्वाधिकरणम्

168 ॐ न प्रयोजनवत्त्वात् ॥ ३३ ॥
169 ॐ लोकवत्तु लीलाकैवल्यम् ॥ ३४ ॥

(१०) वैषम्यनैर्घृण्याधिकरणम्

170 ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥३५॥
171 ॐ न कर्माविभागादिति चेन्नानादित्वात् ॥ ३६ ॥
172 ॐ उपपद्यते चाप्युपलभ्यते च ॥ ३७ ॥

(११) सर्वधर्मोपपत्त्यधिकरणम्

173 ॐ सर्वधर्मोपपत्तेश्च ॥ ३८ ॥

॥ इति द्वितीयाध्यायस्य प्रथमः पादः ॥

## II द्वितीयः(समय)पादः

(१) रचनानुपपत्त्यधिकरणम्

174. ॐ रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

175 ॐ प्रवृत्तेश्च ॥ २ ॥

176 ॐ पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

177 ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

(२) अन्यत्राभावाधिकरणम्

178 ॐ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

(३) अभ्युपगमाधिकरणम्

179 ॐ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

(४) पुरुषाश्माधिकरणम्

180 ॐ पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

181 ॐ अङ्गित्वानुपपत्तेः ॥ ८ ॥

(५) अन्यथानुमित्यधिकरणम्

182 ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

183 ॐ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

(६) वैशेषिकाधिकरणम्

184 ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

185 ॐ उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

186 ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

187 ॐ नित्यमेव च भावात् ॥ १४ ॥

188 ॐ रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

189 ॐ उभयथा च दोषात् ॥ १६ ॥

190 ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

(७) समुदायाधिकरणम्

191 ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

192 ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्

193 ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥
194 ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥
195 ॐ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् २२
196 ॐ उभयथा च दोषात् ॥ २३ ॥
197 ॐ आकाशे चाविशेषात् ॥ २४ ॥
198 ॐ अनुस्मृतेश्च ॥ २५ ॥

(८) शून्या(असद्)धिकरणम्

199 ॐ नासतोऽदृष्टत्वात् ॥ २६ ॥
200 ॐ उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥
201 ॐ नाभाव उपलब्धेः ॥ २८ ॥
202 ॐ वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

(९) अनुपलब्ध्यधिकरणम्

203 ॐ न भावोऽनुपलब्धेः ॥ ३० ॥
204 ॐ क्षणिकत्वाच्च ॥ ३१ ॥
205 ॐ सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥

(१०) नैकस्मिन्नधिकरणम्

206 ॐ नैकस्मिन्नसंभवात् ॥ ३३ ॥
207 ॐ एवं चात्माकार्त्स्न्यम् ॥ ३४ ॥
208 ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५
209 ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॥ ३६ ॥

(११) पत्युर(पशुपत्य)धिकरणम्

210 ॐ पत्युरसामञ्जस्यात् ॥ ३७ ॥
211 ॐ संबधानुपपत्तेश्च ॥ ३८ ॥
212 ॐ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

213 ॐ करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

214 ॐ अंतवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

(१२) उत्पत्त्य(शक्त्य)धिकरणम्

215 ॐ उत्पत्त्यसंभवात् ॥ ४२ ॥

216 ॐ न च कर्तुः करणम् ॥ ४३ ॥

217 ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

218 ॐ विप्रतिषेधाच्च ॥ ४५ ॥

॥ इति द्वितीयाध्यायस्य द्वितीयः पादः ॥



## III श्रुत्यविरोधपादः

(१) वियदधिकरणम्

219 ॐ न वियदश्रुतेः ॥ १ ॥

220 ॐ अस्ति तु ॥ २ ॥

221 ॐ गौण्यसंभवात् ॥ ३ ॥

222 ॐ शब्दाच्च ॥ ४ ॥

223 ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

224 ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

225 ॐ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

(२) मातरिश्वाधिकरणम्

226 ॐ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

(३) असंभवाधिकरणम्

227 ॐ असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

(४) तेजोऽधिकरणम्

228 ॐ तेजोऽतस्तथा ह्याह ॥ १० ॥

(५) अब्धिकरणम्

229 ॐ आपः ॥ ११ ॥

(६) पृथिव्यधिकरणम्

230 ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॥ १२ ॥

(७) तदभिध्यानाधिकरणम्

231 ॐ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

(८) विपर्ययाधिकरणम्

232 ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

(९) अंतराविज्ञाना(अन्तरा)धिकरणम्

233 ॐ अंतरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

234 ॐ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तः तद्भावभावित्वात् ॥ १६ ॥

(१०) आ(ना)त्माधिकरणम्

235 ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

(११) ज्ञाधिकरणम्

236 ॐ ज्ञोऽत एव ॥ १८ ॥

237 ॐ युक्तेश्च ॥ १९ ॥

(१२) उत्क्रांत्यधिकरणम्

238 ॐ उत्क्रांतिगत्यागतीनाम् ॥ २० ॥

239 ॐ स्वात्मना चोत्तरयोः ॥ २१ ॥

240 ॐ नाऽणुरतच्छ्रुतेरिति चेन्नेतराधिकारत् ॥ २२ ॥

241 ॐ स्वशब्दोन्मानाभ्यां च ॥ २३ ॥

242 ॐ अविरोधश्चन्दनवत् ॥ २४ ॥

243 ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि २५

244 ॐ गुणाद्वाऽऽलोकवत् ॥ २६ ॥

(१३) व्यतिरेकाधिकरणम्

245 ॐ व्यतिरेको गंधवत् तथा च दर्शयति ॥ २७ ॥

(१४) पृथगुपदेशाधिकरणम्

246 ॐ पृथगुपदेशात् ॥ २८ ॥

247 ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

(१५) यावदधिकरणम्

248 ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

(१६) पुंस्त्वाधिकरणम्

249 ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

250 ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽ-
न्यतरनियमो वाऽन्यथा ॥ ३२ ॥

(१७) कर्तृत्वाधिकरणम्

251 ॐ कर्ता शास्त्रार्थवत्वात् ॥ ३३ ॥

252 ॐ विहारोपदेशात् ॥ ३४ ॥

253 ॐ उपादानात् ॥ ३५ ॥

254 ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

255 ॐ उपलब्धिवदनियमः ॥ ३७ ॥

256 ॐ शक्तिविपर्ययात् ॥ ३८ ॥

257 ॐ समाध्यभावाच्च ॥ ३९ ॥

258 ॐ यथा च तक्षोभयथा ॥ ४० ॥

259 ॐ परात् तु तच्छ्रुतेः ॥ ४१ ॥

260 ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ४२

(१८) अंशाधिकरणम्

261 ॐ अंशो नानाव्यपदेशादन्यथा चापि
दाशकितवादित्वमधीयत एके ॥ ४३ ॥

262 ॐ मंत्रवर्णात् ॥ ४४ ॥

263 ॐ अपि स्मर्यते ॥ ४५ ॥

264 ॐ प्रकाशादिवन्नैवं परः ॥ ४६ ॥

265 ॐ स्मरंति च ॥ ४७ ॥

266 ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥४८॥

267 ॐ असंततेश्चाव्यतिकरः ॥ ४९ ॥

268 ॐ आभास एव च ॥ ५० ॥

(१९) अदृष्टाधिकरणम्

269 ॐ अदृष्टानियमात् ॥ ५१ ॥

270 ॐ अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

271 ॐ प्रदेशादिति चेन्नांतर्भावात् ॥ ५३ ॥

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥



## IV न्यायोपेतश्रुत्यविरोधपादः

(१) प्राणोत्पत्त्य(प्राणा)धिकरणम्

272 ॐ तथा प्राणाः ॥ १ ॥

273 ॐ गौण्यसंभवात् ॥ २ ॥

274 ॐ प्रतिज्ञानुपरोधाच्च ॥ ३ ॥

(२) तत्प्राग(मनोऽ)धिकरणम्

275 ॐ तत् प्राक् श्रुतेश्च ॥ ४ ॥

(३) तत्पूर्वकत्वा(वाग)धिकरणम्

276 ॐ तत्पूर्वकत्वाद्वाचः ॥ ५ ॥

(४) सप्तगत्यधिकरणम्

277 ॐ सप्त गतेर्विशेषितत्वाच्च ॥ ६ ॥

278 ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ७ ॥

(५) अण्व(अणुत्वा)धिकरणम्

279 ॐ अणवश्च ॥ ८ ॥

(६) श्रेष्ठा(मुख्यप्राणा)धिकरणम्

280 ॐ श्रेष्ठश्च ॥ ९ ॥

281 ॐ न वायुक्रिये पृथगुपदेशात् ॥ १० ॥

(७) चक्षुराद्यधिकरणम्

282 ॐ चक्षुरादिवत्तु तत्सहसृष्ट्यादिभ्यः ॥ ११ ॥

283 ॐ अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ १२ ॥

(८) पञ्चवृत्त्यधिकरणम्

284 ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १३ ॥

(९) अण्व(अणुश्वा)धिकरणम्

285 ॐ अणुश्च ॥ १४ ॥

(१०) ज्योतिराद्यधिकरणम्

286 ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १५ ॥

287 ॐ प्राणवता शब्दात् ॥ १६ ॥

288 ॐ तस्य च नित्यत्वात् ॥ १७ ॥

(११) त इन्द्रियाणीत्य(इंद्रिया)धिकरणम्

289 ॐ **त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १८ ॥**

290 ॐ **भेदश्रुतेः ॥ १९ ॥**

291 ॐ **वैलक्षण्याच्च ॥ २० ॥**

(१२) संज्ञा(मूर्त्य)धिकरणम्

292 ॐ **संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २१ ॥**

(१३) मांसा(द्य)धिकरणम्

293 ॐ **मांसादि भौमं यथाशब्दमितरयोश्च ॥ २२ ॥**

294 ॐ **वैशेष्यात्तु तद्वादस्तद्वादः ॥ २३ ॥**

॥ इति श्रीमत्कृष्णद्वैपायनप्रणीत ब्रह्मसूत्रे द्वितीयाध्यायस्य चतुर्थः पादः ॥

॥ इति द्वितीयोऽध्यायः (अविरोधाध्यायः) ॥



# ॥ तृतीयोऽध्यायः (साधनाध्यायः) ॥

## I वैराग्य पादः

(१) तदन्तराधिकरणम्

295 ॐ **तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

(२) त्र्यात्मकत्वाधिकरणम्

296 ॐ **त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

(३) प्राणगत्यधिकरणम्

297 ॐ **प्राणगतेश्च ॥ ३ ॥**

(४) अग्न्य(अग्न्यादिगत्य)धिकरणम्

298 ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

(५) प्रथमेऽश्रवणाधिकरणम्

299 ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

(६) अश्रुतत्वाधिकरणम्

300 ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

(७) भाक्ताधिकरणम्

301 ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

(८) कृतात्ययाधिकरणम्

302 ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॥ ८ ॥

(९) यथेताधिकरणम्

303 ॐ यथेतमनेवं च ॥ ९ ॥

(१०) चरणाधिकरणम्

304 ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः १०

305 ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ११ ॥

306 ॐ सुकृतदुष्कृते एवेति तु बादरिः ॥ १२ ॥

(११) अनिष्टाधिकरणम्

307 ॐ अनिष्टादिकारिणामपि च श्रुतम् ॥ १३ ॥

308 ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ
तद्गतिदर्शनात् ॥ १४ ॥

309 ॐ स्मरंति च ॥ १५ ॥

(१२) अपिसप्ताधिकरणम्

310 ॐ अपि सप्त ॥ १६ ॥

(१३) तत्राप्यधिकरणम्

311 ॐ **तत्रापि च तद्व्यापारादविरोधः ॥ १७ ॥**

(१४) विद्या(कर्मा)धिकरणम्

312 ॐ **विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १८ ॥**

(१५) न तृतीया(महातमोऽ)धिकरणम्

313 ॐ **न तृतीये तथोपलब्धेः ॥ १९ ॥**

314 ॐ **स्मर्यतेऽपि च लोके ॥ २० ॥**

315 ॐ **दर्शनाच्च ॥ २१ ॥**

316 ॐ **तृतीये शब्दावरोधः संशोकजस्य ॥ २२ ॥**

317 ॐ **स्मरणाच्च ॥ २३ ॥**

(१६) तत्स्वाभाव्याधिकरणम्

318 ॐ **तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २४ ॥**

(१७) नातिचिरेणाधिकरणम्

319 ॐ **नातिचिरेण विशेषात् ॥ २५ ॥**

(१८) अन्याधिकरणम्

320 ॐ **अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २६ ॥**

321 ॐ **अशुद्धमिति चेन्न शब्दात् ॥ २७ ॥**

(१९) रेतोऽधिकरणम्

322 ॐ **रेतःसिग्योगोऽथ ॥ २८ ॥**

(२०) योन्यधिकरणम्

323 ॐ **योनेः शरीरम् ॥ २९ ॥**

॥ इति तृतीयाध्यायस्य प्रथमः पादः ॥

---

## II द्वितीयः (भक्ति)पादः

### (१) सन्ध्याधिकरणम्

324 ॐ सन्ध्ये सृष्टिराह हि ॥ १ ॥
325 ॐ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥
326 ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥
327 ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

### (२) पराभिध्यानाधिकरणम्

328 ॐ पराभिध्यानात् तु तिरोहितं
ततो ह्यस्य बंधविपर्ययौ ॥ ५ ॥

### (३) देहयोगाधिकरणम्

329 ॐ देहयोगाद्वासोऽपि ॥ ६ ॥

### (४) तदभावाधिकरणम्

330 ॐ तदभावो नाडिषु तच्छ्रुतेरात्मनि हि ॥ ७ ॥

### (५) (अतः) प्रबोधाधिकरणम्

331 ॐ अतः प्रबोधोऽस्मात् ॥ ८ ॥

### (६) कर्मानुस्मृत्यधिकरणम्

332 ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

### (७) मुग्धा(संपत्त्य)धिकरणम्

333 ॐ मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

### (८) नस्थानतोऽ(स्थानभेद)धिकरणम्

334 ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥
335 ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥
336 ॐ अपि चैवमेके ॥ १३ ॥

(९) अरूपवदधिकरणम्

337 ॐ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

338 ॐ प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

339 ॐ आह च तन्मात्रम् ॥ १६ ॥

340 ॐ दर्शयति चाथोऽपि स्मर्यते ॥ १७ ॥

(१०) उपमाधिकरणम्

341 ॐ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

(११) अम्बुवदधिकरणम्

342 ॐ अम्बुवदग्रहणात् तु न तथात्वम् ॥ १९ ॥

(१२) वृद्धिह्रासाधिकरणम्

343 ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् २०

344 ॐ दर्शनाच्च ॥ २१ ॥

(१३) प्रकृतैताव(पालक)त्वाधिकरणम्

345 ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति
ततो ब्रवीति च भूयः ॥ २२ ॥

(१४) तदव्यक्ताधिकरणम्

346 ॐ तदव्यक्तमाह हि ॥ २३ ॥

347 ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

348 ॐ प्रकाशवच्चावैशेष्यम् ॥ २५ ॥

349 ॐ प्रकाशश्च कर्मण्यभ्यासात् ॥ २६ ॥

350 ॐ अतोऽनन्तेन तथा हि लिङ्गम् ॥ २७ ॥

(१५) अहिकुण्डलाधिकरणम्

351 ॐ उभयव्यपदेशात्तु अहिकुण्डलवत् ॥ २८ ॥

352 ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २९ ॥

353 ॐ पूर्ववद्वा ॥ ३० ॥
354 ॐ प्रतिषेधाच्च ॥ ३१ ॥

(१६) परमतोऽ(परानंद)धिकरणम्

355 ॐ परमतः सेतून्मानसंबंधभेदव्यपदेशेभ्यः ॥ ३२ ॥
356 ॐ तद्दर्शनात् ॥ ३३ ॥
357 ॐ बुद्ध्यर्थः पादवत् ॥ ३४ ॥

(१७) स्थानविशेषा(वेशेष्या)धिकरणम्

358 ॐ स्थानविशेषात् प्रकाशादिवत् ॥ ३५ ॥
359 ॐ उपपत्तेश्च ॥ ३६ ॥

(१८) तथान्यद(प्रतिषेधा)धिकरणम्

360 ॐ तथाऽन्यत्प्रतिषेधात् ॥ ३७ ॥

(१९) सर्वगतत्वाधिकरणम्

361 ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॥ ३८ ॥

(२०) फलाधिकरणम्

362 ॐ फलमत उपपत्तेः ॥ ३९ ॥
363 ॐ श्रुतत्वाच्च ॥ ४० ॥
364 ॐ धर्मं जैमिनिरत एव ॥ ४१ ॥
365 ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४२ ॥

॥ इति तृतीयाध्यायस्य द्वितीयः पादः ॥

---

## III तृतीयः (उपासना)पादः

(१) सर्ववेदान्ताधिकरणम्

366 ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

367 ॐ भेदान्नेति चेदेकस्यामपि ॥ २ ॥

368 ॐ स्वाध्यायस्य तथात्वेन हि
समाचारे अधिकाराच्च ॥ ३ ॥

369 ॐ सलिलवच्च तन्नियमः ॥ ४ ॥

370 ॐ दर्शयति च ॥ ५ ॥

(२) उपसंहाराधिकरणम्

371 ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ६ ॥

372 ॐ अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॥ ७ ॥

373 ॐ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ८ ॥

374 ॐ संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ९ ॥

(३) प्राप्त्यधिकरणम्

375 ॐ प्राप्तेश्च समञ्जसम् ॥ १० ॥

(४) सर्वाभेदाधिकरणम्

376 ॐ सर्वाभेदादन्यत्रेमे ॥ ११ ॥

(५) आनन्दाद्यधिकरणम्

377 ॐ आनन्दादयः प्रधानस्य ॥ १२ ॥

(६) प्रियशिरस्त्वाधिकरणम्

378 ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥१३॥

(७) इतरा(फलासाम्या)धिकरणम्

379 ॐ इतरे त्वर्थसामान्यात् ॥ १४ ॥

(८) आध्यानाधिकरणम्

380 ॐ आध्यानाय प्रयोजनाभावात् ॥ १५ ॥

381 ॐ आत्मशब्दाच्च ॥ १६ ॥

(९) आत्मगृहीत्यधिकरणम्

382 ॐ आत्मगृहीतिरितरवदुत्तरात् ॥ १७ ॥

(१०) अन्वयाधिकरणम्

383 ॐ अन्वयादिति चेत् स्यादवधारणात् ॥ १८ ॥

(११) कार्या(ख्याना)धिकरणम्

384 ॐ कार्याख्यानादपूर्वम् ॥ १९ ॥

(१२) समानाधिकरणम्

385 ॐ समान एवं चाभेदात् ॥ २० ॥

386 ॐ सम्बन्धादेवमन्यत्रापि ॥ २१ ॥

(१३) न वा (विशेषा)धिकरणम्

387 ॐ न वा विशेषात् ॥ २२ ॥

388 ॐ दर्शयति च ॥ २३ ॥

(१४) सम्भृत्यधिकरणम्

389 ॐ सम्भृतिद्युव्याप्त्यपि चातः ॥ २४ ॥

(१५) पुरुषविद्याधिकरणम्

390 ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २५ ॥

(१६) वेधाद्यधिकरणम्

391 ॐ वेधाद्यर्थभेदात् ॥ २६ ॥

(१७) हान्य(मुक्त्योपासना)धिकरणम्

392 ॐ हानौ तूपायनशब्दशेषत्वात्
कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ॥ २७ ॥

393 ॐ सांपराये तर्तव्याभावात् तथाह्यन्ये ॥ २८ ॥

(१८) छन्दाधिकरणम्

394 ॐ छन्दत उभयाविरोधात् ॥ २९ ॥

395 ॐ गतेरर्थवत्वमुभयथाऽन्यथा हि विरोधः ॥ ३० ॥

396 ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३१ ॥

(१९) अनियमाधिकरणम्

397 ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ३२

(२०) यावदधिकरणम्

398 ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३३ ॥

399 ॐ अक्षरधियां त्वविरोधः
सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३४ ॥

(२१) इयदामननाधिकरणम्

400 ॐ इयदामननात् ॥ ३५ ॥

401 ॐ अन्तरा भूतग्रामवदिति चेत् तदुक्तम् ॥ ३६ ॥

402 ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३७ ॥

(२२) व्यतिहाराधिकरणम्

403 ॐ व्यतिहारो विशिंषंति हीतरवत् ॥ ३८ ॥

(२३) सत्याधिकरणम्

404 ॐ सैव हि सत्यादयः ॥ ३९ ॥

(२४) कामाधिकरणम्

405 ॐ कामादिरत्र तत्र चायनतादिभ्यः ॥ ४० ॥

406 ॐ आदरादलोपः ॥ ४१ ॥

407 ॐ उपस्थितेस्तद्वचनात् ॥ ४२ ॥

(२५) निर्धारणाधिकरणम्

408 ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः
पृथग्घ्यप्रतिबन्धः फलम् ॥ ४३ ॥

(२६) प्रदानाधिकरणम्

409 ॐ प्रदानवदेव हि तदुक्तम् ॥ ४४ ॥

(२७) लिङ्गभूयस्त्वा(गुरुप्रसादा)धिकरणम्

410 ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४५ ॥

(२८) पूर्वविकल्पाधिकरणम्

411 ॐ पूर्वविकल्पः प्रकरणात् स्यात्क्रियामानसवत् ॥ ४६ ॥

412 ॐ अतिदेशाच्च ॥ ४७ ॥

(२९) विद्याधिकरणम्

413 ॐ विद्यैव तु निर्धारणात् ॥ ४८ ॥

414 ॐ दर्शनाच्च ॥ ४९ ॥

(३०) श्रुत्याद्य(अबाधा)धिकरणम्

415 ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ५० ॥

(३१) अनुबन्धाधिकरणम्

416 ॐ अनुबन्धादिभ्यश्च ॥ ५१ ॥

(३२) प्रज्ञान्तराधिकरणम्

417 ॐ प्रज्ञान्तरपृथक्त्वाद्दृष्टिश्च तदुक्तम् ॥ ५२ ॥

(३३) न सामान्याधिकरणम्

418 ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ५३

(३४) परेणाधिकरणम्

419 ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ५४

(३५) एकाधिकरणम्

420 ॐ एक आत्मनः शरीरे भावात् ॥ ५५ ॥

421 ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५६ ॥

(३६) अङ्गा(वबद्धा)धिकरणम्

422 ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५७ ॥

423 ॐ मन्त्रादिवद्वाऽविरोधः ॥ ५८ ॥

(३७) भूमाधिकरणम्

424 ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॥ ५९ ॥

(३८) नाना(शब्दा)धिकरणम्

425 ॐ नाना शब्दादिभेदात् ॥ ६० ॥

(३९) विकल्पाधिकरणम्

426 ॐ विकल्पो विशिष्टफलत्वात् ॥ ६१ ॥

(४०) काम्याधिकरणम्

427 ॐ काम्यास्तु यथाकामं समुच्चीयेरन्
न वा पूर्वहेत्वभावात् ॥ ६२ ॥

(४१) अङ्गाधिकरणम्

428 ॐ अङ्गेषु यथाश्रयभावः ॥ ६३ ॥

429 ॐ शिष्टेश्च ॥ ६४ ॥

430 ॐ समाहारात् ॥ ६५ ॥

431 ॐ गुणसाधारण्यश्रुतेश्च ॥ ६६ ॥

(४२) नवाऽधिकरणम्

432 ॐ न वा तत्सहभावश्रुतेः ॥ ६७ ॥

433 ॐ दर्शनाच्च ॥ ६८ ॥

॥ इति तृतीयाध्यायस्य तृतीयः पादः ॥

## IV चतुर्थः (अपरोक्षज्ञान)पादः

### (१) पुरुषार्थाधिकरणम्

434 ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥
435 ॐ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥२॥
436 ॐ आचारदर्शनात् ॥ ३ ॥
437 ॐ तच्छ्रुतेः ॥ ४ ॥
438 ॐ समन्वारम्भणात् ॥ ५ ॥
439 ॐ तद्वतो विधानात् ॥ ६ ॥
440 ॐ नियमाच्च ॥ ७ ॥
441 ॐ अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥
442 ॐ तुल्यं तु दर्शनात् ॥ ९ ॥

### (२) असार्वत्रिक्य(अधिकारा)धिकरणम्

443 ॐ असार्वत्रिकी ॥ १० ॥
444 ॐ विभागः शतवत् ॥ ११ ॥
445 ॐ अध्ययनमात्रवतः ॥ १२ ॥

### (३) अविशेषाधिकरणम्

446 ॐ नाविशेषात् ॥ १३ ॥

### (४) स्तुत्य(कामाचारा)धिकरणम्

447 ॐ स्तुतयेऽनुमतिर्वा ॥ १४ ॥
448 ॐ कामकारेण चैके ॥ १५ ॥
449 ॐ उपमर्दं च ॥ १६ ॥
450 ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥
451 ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

452 ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

453 ॐ विधिर्वा धारणवत् ॥ २० ॥

454 ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

455 ॐ भावशब्दाच्च ॥ २२ ॥

456 ॐ परिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

457 ॐ तथा चैकवाक्योपबन्धात् ॥ २४ ॥

458 ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

459 ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

460 ॐ शमदमाद्युपेतः स्यात् तथापि तु
तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ १७ ॥

461 ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

462 ॐ अबाधाच्च ॥ २९ ॥

463 ॐ अपि स्मर्यते ॥ ३० ॥

464 ॐ शब्दाश्चातोऽकामचारे ॥ ३१ ॥

465 ॐ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

466 ॐ सहकारित्वेन च ॥ ३३ ॥

(५) उभयलिङ्गाधिकरणम्

467 ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॥ ३४ ॥

468 ॐ अनभिभवं च दर्शयति ॥ ३५ ॥

469 ॐ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

470 ॐ अपि स्मर्यते ॥ ३७ ॥

471 ॐ विशेषानुग्रहं च ॥ ३८ ॥

472 ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

473 ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि
नियमातद्रूपाभावेभ्यः ॥ ४० ॥

(६) आधिकारिकाधिकरणम्

474 ॐ **न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥४१॥**

475 ॐ **उपपूर्वमपीत्येके भावशमनवत् तदुक्तम् ॥ ४२ ॥**

476 ॐ **बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥**

(७) स्वाम्य(फलश्रुत्य)धिकरणम्

477 ॐ **स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥**

478 ॐ **आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥४५॥**

479 ॐ **सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥**

(८) कृत्स्नभावाधिकरणम्

480 ॐ **कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥**

481 ॐ **मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥**

(९) अनाविष्काराधिकरणम्

482 ॐ **अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥**

(१०) ऐहिकाधिकरणम्

483 ॐ **ऐहिकमप्रस्तुतप्रतिबंधे तद्दर्शनात् ॥ ५० ॥**

(११) मुक्तिफलाधिकरणम्

484 ॐ **एवं मुक्तिफलानियमः तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥**

॥ इति श्रीमत्कृष्णद्वैपायनप्रणीत ब्रह्मसूत्रे तृतीयाध्यायस्य चतुर्थः पादः ॥

॥ इति तृतीयाध्यायः (साधनाध्यायः) ॥

# ॥ चतुर्थोध्यायः(फलाध्यायः) ॥

## I कर्मक्षय पादः

### (१) आवृत्त्यधिकरणम्

485 ॐ **आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

486 ॐ **लिङ्गाच्च ॥ २ ॥**

### (२) आत्मा(आत्मोपगमा)धिकरणम्

487 ॐ **आत्मेति तूपगच्छन्ति ग्राहयंति च ॥ ३ ॥**

### (३) (न) प्रतीकाधिकरणम्

488 ॐ **न प्रतीके न हि सः ॥ ४ ॥**

### (४) ब्रह्मा(दृष्ट्य)धिकरणम्

489 ॐ **ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥**

### (५) आदित्या(दिमत्य)धिकरणम्

490 ॐ **आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥**

### (६) आसीना(आसना)धिकरणम्

491 ॐ **आसीनः संभवात् ॥ ७ ॥**

492 ॐ **ध्यानाच्च ॥ ८ ॥**

493 ॐ **अचलत्वं चापेक्ष्य ॥ ९ ॥**

494 ॐ **स्मरंति च ॥ १० ॥**

495 ॐ **यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥**

### (७) (आ)प्रायणाधिकरणम्

496 ॐ **आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥**

(८) तदधिगमाधिकरणम्

497 ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्
498 ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥
499 ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥
500 ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥
501 ॐ अतोऽन्यदपीत्येकेषामुभयोः ॥ १७ ॥
502 ॐ यदेव विद्ययेति हि ॥ १८ ॥
503 ॐ भोगेन त्वितरे क्षपयित्वाऽथ संपत्स्यते ॥ १९ ॥

॥ इति चतुर्था(फला)ध्यायस्य प्रथमः (कर्मक्षय)पादः ॥

---

## II उत्क्रांति पादः

(१) वाग(वाङ्मनसा)धिकरणम्

504 ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥
505 ॐ अत एव च सर्वाण्यनु ॥ २ ॥

(२) मनःप्राणा(मनोऽ)धिकरणम्

506 ॐ तन्मनः प्राण उत्तरात् ॥ ३ ॥

(३) अध्यक्षाधिकरणम्

507 ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

(४) भूताधिकरणम्

508 ॐ भूतेषु तच्छ्रुतेः ॥ ५ ॥

(५) नैकस्मिन्न(अनेकलया)धिकरणम्

509 ॐ नैकस्मिन् दर्शयतो हि ॥ ६ ॥

(६) समनाधिकरणम्

510 ॐ समना चासृत्युपक्रमादमृतत्वं चापेक्ष्य ॥ ७ ॥
511 ॐ तदपीतेः संसारव्यपदेशात् ॥ ८ ॥
512 ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥
513 ॐ नोपमर्देनातः ॥ १० ॥
514 ॐ अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥
515 ॐ प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥
516 ॐ स्पष्टो ह्येकेषाम् ॥ १३ ॥
517 ॐ स्मर्यते च ॥ १४ ॥

(७) परा(परलया)धिकरणम्

518 ॐ तानि परे तथा ह्याह ॥ १५ ॥

(८) अविभागाधिकरणम्

519 ॐ अविभागो वचनात् ॥ १६ ॥

(९) तदोको(हृदयाग्रा)ज्वलनाधिकरणम्

520 ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया
521 ॐ रश्म्यनुसारी ॥ १८ ॥
522 ॐ निशि नेति चेन्न संबन्धात् ॥ १९ ॥
523 ॐ यावद्देहभावित्वाद्दर्शयति च ॥ २० ॥
524 ॐ अतश्चायनेऽपि हि दक्षिणे ॥ २१ ॥

(१०) योग्य(प्रतिस्मरणा)धिकरणम्

525 ॐ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २२ ॥

॥ इति चतुर्था(फला)ध्यायस्य द्वितीयः (उत्क्रांति)पादः ॥

## III मार्गपादः

(१) अर्चिराद्यधिकरणम्

526 ॐ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

(२) वायु(शब्द)गत्यधिकरणम्

527 ॐ वायुशब्दादविशेषविशेषाभ्याम् ॥ २ ॥

(३) तटिदधिकरणम्

528 ॐ तटितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

(४) आतिवाहिकाधिकरणम्

529 ॐ आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥

530 ॐ उभयव्यामोहात् तत्सिद्धेः ॥ ५ ॥

(५) वैद्युताधिकरणम्

531 ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

(६) कार्यप्राप्त्य(कार्या)धिकरणम्

532 ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

533 ॐ विशेषितत्वाच्च ॥ ८ ॥

534 ॐ सामीप्यात् तु तद्व्यपदेशः ॥ ९ ॥

535 ॐ कार्यात्यये तदध्यक्षेण सहातःपरमभिधानात् ॥ १० ॥

536 ॐ स्मृतेश्च ॥ ११ ॥

537 ॐ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

438 ॐ दर्शनाच्च ॥ १३ ॥

539 ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥

540 ॐ अप्रतीकालम्बनान् नयतीति बादरायणः
उभयथा च दोषात् तत्क्रतुश्च ॥ १५ ॥

541 ॐ विशेषं च दर्शयति ॥ १६ ॥

॥ इति चतुर्था(फला)ध्यायस्य तृतीयः (मार्ग)पादः ॥

## IV भोग पादः

(१) संपद्या(आत्मसंपत्त्य)धिकरणम्

542 ॐ संपद्याविहाय स्वेन शब्दात् ॥ १ ॥

(२) मुक्ताधिकरणम्

543 ॐ मुक्तः प्रतिज्ञानात् ॥ २ ॥

(३) आत्माधिकरणम्

544 ॐ आत्मा प्रकरणात् ॥ ३ ॥

(४) अविभागाधिकरणम्

545 ॐ अविभागेन दृष्टत्वात् ॥ ४ ॥

(५) ब्राह्मा(चितिमात्रा)धिकरणम्

546 ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

547 ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

548 ॐ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ७

(६) संकल्पाधिकरणम्

549 ॐ संकल्पादेव च तच्छ्रुतेः ॥ ८ ॥

(७) अनन्याधिपत्यधिकरणम्

550 ॐ अत एव चानन्याधिपतिः ॥ ९ ॥

(८) अभावा(उभयविधभोगा)धिकरणम्

551 ॐ अभावं बादरिराह ह्येवम् ॥ १० ॥

552 ॐ भावं जैमिनिर्विकल्पाम्नानात् ॥ ११ ॥

553 ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

554 ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

555 ॐ भावे जाग्रद्वत् ॥ १४ ॥
556 ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥
557 ॐ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

(९) जगद्व्यापारा(सर्वकामा)धिकरणम्

558 ॐ जगद्व्यापारवर्जम् ॥ १७ ॥
559 ॐ प्रकरणादसन्निहितत्वाच्च ॥ १८ ॥
560 ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः
561 ॐ विकारावर्ति च तथा हि दर्शयति ॥ २० ॥

(१०) (ऐकरूप)स्थित्यधिकरणम्

562 ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २१ ॥
563 ॐ भोगमात्रसाम्यलिङ्गाच्च ॥ २२ ॥

(११) अनावृत्त्यधिकरणम्

564 ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २३ ॥

॥ इति श्रीमत्कृष्णद्वैपायनप्रणीत ब्रह्मसूत्रे चतुर्थाध्यायस्य चतुर्थः (भोग)पादः ॥

॥ इति चतुर्थोऽध्यायः (फलाध्यायः) ॥

## ॥ श्रीमत्कृष्णद्वैपायनप्रणीत ब्रह्मसूत्राणि ॥

॥ श्रीकृष्णार्पणमस्तु ॥



## 2. श्रीमदानंदतीर्थभगवत्पादविरचितं

# ॥ श्रीमदणुभाष्यम् ॥

---

नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥ १ ॥

विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदितः ।
समन्वयादीक्षतेश्च पूर्णानंदोऽतरः खवत् ॥ २ ॥

प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ।
उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः ॥ ३ ॥

सर्वगोऽत्ता नियंता च दृश्यत्वाद्युज्झितः सदा
विश्वजीवांतरत्वाद्यैर्लिंगैः सर्वैर्युतः स हि ॥ ४ ॥

सर्वाश्रयः पूर्णगुणः सोऽक्षरः सन् हृदब्जगः ।
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ॥ ५ ॥

ज्ञेयो न वेदैः शूद्राद्यैः कंपकोऽन्यश्च जीवतः ।
पतित्वादिगुणैर्युक्तस्तदन्यत्र च वाचकैः ॥ ६ ॥

मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ।
अव्यक्तः कर्मवाक्यैश्च वाच्य एकोऽमितात्मकः ॥ ७ ॥

अवांतरं कारणं च प्रकृतिः शून्यमेव च ।
इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः ।
शब्दैरतोऽनंतगुणो यच्छब्दा योगवृत्तयः ॥ ८ ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादविरचिते श्रीमदणुभाष्ये प्रथमोऽध्यायः ॥

॥ द्वितीयोऽध्यायः ॥

श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः ।
निषेद्धुं शक्नुयुर्वेदा नित्यत्वान्मानमुत्तमम् ॥ ९ ॥
देवतावचनादा(न्ना)पो वदंतीत्यादिकं वचः ।
नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ॥ १० ॥
असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ।
वदंति कारणत्वेन क्वापि पूर्णगुणो हरिः ॥ ११ ॥
स्वातंत्र्यात् सर्वकर्तृत्वात् नायुक्तं तद्वदेच्छ्रुतिः ।
भ्रांतिमूलतया सर्वसमयानामयुक्तितः ॥ १२ ॥
न तद्विरोधाद्वचनं वैदिकं शंक्यतां व्रजेत् ।
आकाशादि समस्तं च तज्जं तेनैव लीयते ॥ १३ ॥
सोऽनुत्पत्तिलयः कर्ता जीवस्तद्वशगः सदा ।
तदाभासो हरिः सर्वरूपेष्वपि समः सदा ॥ १४ ॥
मुख्यप्राणश्चेंद्रियाणि देहश्चैव तदुद्भव(वा)ः ।
मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ॥ १५ ॥
सर्वदोषोज्झितस्तस्माद्भगवान् पुरुषोत्तमः ।
उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्व(था)शः ॥ १६ ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादविरचिते श्रीमदणुभाष्ये द्वितीयोऽध्यायः ॥

---

॥ तृतीयोऽध्यायः ॥

शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा ।
मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ॥ १७ ॥

याति तस्माद्विरक्तः सन् ज्ञानमेव समाश्रयेत् ।
सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् ॥ १८ ॥

सर्वदेशेषु कालेषु स एकः परमेश्वरः ।
तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ॥ १९ ॥

सच्चिदानंद आत्मेति मानुषैस्तु(श्च) सुरेश्वरैः ।
यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः ॥ २० ॥

उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम् ।
ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम् ॥ २१ ॥

सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशयः ।
न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ॥ २२ ॥

गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ।
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ॥ २३ ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादविरचिते श्रीमदणुभाष्ये तृतीयोऽध्यायः ॥

---

## ॥ चतुर्थोऽध्यायः ॥

विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम् ।
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ॥ २४ ॥

प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः ।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥ २५ ॥

उत्तरेषूत्तरेष्वेव(वं) यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुंजते भोगांस्तदंतर्बहिरेव वा ॥ २६ ॥

वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम् ।
उत्क्रम्य मानुषा मुक्तिं यांति देहक्षयात् सुराः ॥ २७ ॥

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यांत्युत्तमा नरोच्चाद्या ब्रह्मलोकात् सहामुना ॥ २८ ॥

यथासंकल्पभोगाश्च चिदानंदशरीरिणः ।
जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते ॥ २९ ॥

यथेष्टशक्तिमंतश्च विना स्वाभाविकोत्तमान् ।
अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः ।
दुःखादिरहिता नित्यं मोदंतेऽविरतं सुखम् ॥ ३० ॥

पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः ।
कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः ॥ ३१ ॥

नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ।
विरिंचिशर्वपूर्वेड्यवंद्याय श्रीवराय ते ॥ ३२ ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादविरचित श्रीमदणुभाष्ये चतुर्थोऽध्यायः ॥

## ॥ इति श्रीमदानंदतीर्थभगवत्पादविरचितं श्रीमदणुभाष्यम्* ॥



*'अणुवेदांतः', 'संग्रहभाष्यम्, 'भाष्यसंग्रहः' 'सर्वशास्त्रार्थसंग्रहः' इत्यस्यैव नामांतराणि ।

## 3. श्रीवादिराजतीर्थश्रीचरणविरचिता

# ॥ (ब्रह्मसूत्र)अधिकरणनामावलिः ॥

( संक्षेपतो ब्रह्मसूत्रभाष्याधिकरणार्थवत्तया परमात्मनो नम्यत्वोक्तिः क्रियते )

1 ॐ विशिष्टाधिकारिकमोक्षफलकजिज्ञासागोचराय नमः ॐ १

2 ॐ जगज्जन्माद्यष्टकर्त्रे नमः २

3 ॐ वेदादिसकलशास्त्रजनितनिखिलजगज्जन्मादि-
कारणत्वप्रमागोचराय नमः ३

4 ॐ उपक्रमादिलिङ्गकनिखिलशास्त्रतात्पर्यगोचराय नमः ४

5 ॐ सर्वशब्दमुख्यवाच्याय नमः ५

ॐ अन्यत्रप्रसिद्धनामात्मकाशेषशब्दसमन्वयप्रतिपादक-
पादप्रतिपाद्याय नमः ६

6 ॐ आनन्दमयादिगुणसामान्यवाच्यानन्दादिगुण-
वाचिशब्दसमन्वयगोचराय नमः ७

7 ॐ सर्वान्तस्थेन्द्राद्यशेषाधिदैवगतशब्दवाच्याय नमः ८

8 ॐ आकाशाद्याधिभौतिकसर्वशब्दवाच्याय नमः ९

9 ॐ प्राणाद्यशेषाध्यात्मिकसर्वशब्दवाच्याय नमः १०

10 ॐ कर्णाद्यगोचरज्योतिषे नमः ११

11 ॐ गायत्रीशब्दवाच्याय नमः १२

12 ॐ त्रिविधोपासनागोचरप्राणशब्दवाच्याय नमः १३

॥ इति प्रथमा(समन्वया)ध्यायस्य प्रथमः पादः ॥

---

* प्रत्यधिकरणं अंतेऽपि ॐकारः पठितव्यः ।

13 ॐ सर्वगताय नमः १
14 ॐ चराचरात्त्रे नमः २
15 ॐ गुहांप्रविष्टत्वप्रयुक्तसुकृतफलभोक्त्रे नमः ३
16 ॐ अक्ष्यादित्याद्यन्तस्थाय दिव्यदृष्टिगोचराय नमः ४
17 ॐ सर्वान्तर्यामिणे नमः ५
18 ॐ अदृश्यत्वादिगुणकाय नमः ६
19 ॐ पाचकत्वादिमद्वैश्वानराय नमः ७

ॐ अन्यत्रप्रसिद्धलिङ्गात्मकाशेषशब्दवाच्याय नमः ॐ

॥ इति प्रथमा(समन्वया)ध्यायस्य द्वितीयः पादः ॥

20 ॐ द्युभ्याद्यायतनाय नमः १
21 ॐ भूम्ने नमः २
22 ॐ अक्षराय नमः ३
23 ॐ सते नमः ४
24 ॐ हृत्पद्मस्थाय नमः ५
25 ॐ आनुकूल्येन गृह्यमाणाय नमः ६
26 ॐ ईशानाय नमः ७
27 ॐ ब्रह्मविद्याधिकारिदेवोपास्याय नमः ८
28 ॐ शूद्राद्यैर्वेदविद्याविज्ञेयाय नमः ९
29 ॐ वज्राय नमः १०
30 ॐ ज्योतिषे नमः ११
31 ॐ आकाशाय नमः १२
32 ॐ स्वप्नादिद्रष्ट्रे असङ्गाय नमः १३
33 ॐ नित्यमहिम्ने ब्राह्मणाय नमः १४

ॐ उभयत्रप्रसिद्धनामलिङ्गात्मकाशेषशब्दवाच्याय नमः ॐ

॥ इति प्रथमा(समन्वया)ध्यायस्य तृतीयः पादः ॥

34 ॐ अव्यक्ताय नमः १
35 ॐ कर्मतदङ्गवाचिज्योतिष्टोमवसन्तादिशब्दवाच्याय नमः २
36 ॐ बहुत्वसंख्याविशिष्टवाचिपञ्चजनादिशब्दवाच्याय नमः ३
37 ॐ अवान्तरकारणवाच्याकाशादिशब्दवाच्याय नमः ४
38 ॐ सकललौकिकवैदिकशब्दपरममुख्यार्थाय नमः ५
39 ॐ प्रकृत्याद्यशेषस्त्रीलिङ्गशब्दवाच्याय नमः ६
40 ॐ निषेधमुखवेदशब्दवाच्यसदादिशब्दवाच्यायाशेषस्वरवर्ण-पदवाक्यात्मकाशेषशास्त्रयोनये जगज्जन्मादिकर्तृत्वमुखा-नन्तगुणाय नमः ७

ॐ अन्यत्रैव प्रसिद्धाशेषशब्दवाच्याय नमः ॐ

॥ इति प्रथमाध्याय(समन्वयध्याय)स्य चतुर्थः पादः ॥

द्वितीयाध्या(अविरोधाध्या)यः

ॐ सकलविरोधशून्यसमन्वयगोचराय नमः ॐ

41 ॐ अप्रमाणावैदिकस्मृत्यविरुद्धकारणत्ववते नमः १
42 ॐ फलाविसंवाद्यनित्यविलक्षणवेदगोचराय नमः २
43 ॐ जडत्वयुक्त्यविरुद्धमृदाद्यभिमानिवक्तृत्वपरवेदगोचराय नमः
44 ॐ विश्वप्रागभावकर्तृत्वसाधकयुक्त्यविरुद्धकर्तृत्ववते नमः ४
45 ॐ जीवाभिन्नत्वयुक्त्यविरुद्धसर्वकर्तृत्ववते नमः ५
46 ॐ स्वतन्त्रसाधनान्तरसापेक्षत्वयुक्त्यविरुद्धस्वतन्त्रकर्तृत्ववते नमः ६
47 ॐ जीवकर्तृत्वयुक्त्यविरुद्धकारणत्ववते नमः ७
48 ॐ सर्वशक्तिप्रसक्त्यादियुक्त्यविरुद्धकर्तृत्ववते नमः ८
49 ॐ निष्फलत्वादियुक्त्यविरुद्धकर्तृत्ववते नमः ९
50 ॐ वैषम्यादिदोषप्राप्तिरूपयुक्त्यविरुद्धसर्वकर्तृत्ववते नमः १०
51 ॐ चेतनत्वयुक्त्यविरुद्धसर्वगुणपूर्णत्ववते नमः ११

ॐ सर्वयुक्त्यविरुद्धगुणपूर्णत्ववते नमः ॐ

॥ इति द्वितीया(अविरोधा)ध्यायस्य प्रथमः(युक्ति)पादः ॥

52 ॐ निरीश्वरसांख्यसमयाविरुद्धकारणत्ववते नमः १
53 ॐ सेश्वरसांख्यसमयाविरुद्धस्वतःकर्तृत्ववते नमः २
54 ॐ चार्वाकसमयाविरुद्धजगत्कारणत्ववते नमः ३
55 ॐ पुरुषोपसर्जनप्रकृतिकर्तृत्वसमयाविरुद्धकारणत्ववते नमः ४
56 ॐ प्रकृत्युपसर्जनपुरुषकर्तृत्वसमयाविरुद्धजगत्कर्तृत्ववते नमः ५
57 ॐ वैशेषिकादिसमयाविरुद्धसर्वगुणपूर्णत्ववते नमः ६
58 ॐ वैभाषिकसौत्रान्तिकसमयाविरुद्धजगत्कर्तृत्ववते नमः ७
59 ॐ शून्यसमयाविरुद्धजगत्कारणत्ववते नमः ८
60 ॐ विज्ञानवादिसमयाविरुद्धजगत्कारणत्ववते नमः ९
61 ॐ जैनसमयाविरुद्धजगत्कारणत्ववते नमः १०
62 ॐ पाशुपतमताविरुद्धजगत्कारणत्ववते नमः ११
63 ॐ शक्तिमताविरुद्धजगत्कारणत्ववते नमः १२

ॐ सर्वकुसमयाविरुद्धजगत्कर्तृत्ववते नमः ॐ

॥ इति द्वितीया(अविरोधा)ध्यायस्य द्वितीयः(समय)पादः ॥

---

64 ॐ आकाशोत्पत्तिश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १
65 ॐ मुख्यवायूत्पत्तिश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः २
66 ॐ स्वोत्पत्तिश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ३
67 ॐ तेजोजन्मश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ४
68 ॐ अब्जन्मश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ५
69 ॐ द्वारविषयश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ६
70 ॐ स्वाकर्तृकजगत्संहारश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः
71 ॐ अधिभूतादिसंहारकश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः
72 ॐ अधिभूतादिलयक्रमश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः
73 ॐ स्वलयश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १०

74 ॐ जीवजन्मश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ११
75 ॐ जीवपरिमाणश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १२
76 ॐ जीवसांशत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १३
77 ॐ जीवैक्यश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १४
78 ॐ जीवनित्यत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १५
79 ॐ जीवस्वरूपश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १६
80 ॐ जीवकर्तृत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १७
81 ॐ जीवेशांशत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १८
82 ॐ जीवप्रतिबिम्बत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १९

ॐ इति श्रुतिपरस्पराविरोधप्रयोज्यसमन्वयगोचराय नमः ॐ

॥ इति द्वितीया(अविरोध)ध्यायस्य तृतीयः (परस्परश्रुत्यविरोध)पादः ॥

---

83 ॐ इन्द्रियोत्पत्तिश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १
84 ॐ मनोजन्मश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः २
85 ॐ वागुत्पत्तिश्रुत्यविरोधप्रयोज्यसमन्ययगोचराय नमः ३
86 ॐ प्राणसंख्याश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ४
87 ॐ प्राणपरिमाणश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ५
88 ॐ मुख्यप्राणजन्मश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ६
89 ॐ मुख्यप्राणपारतन्त्र्यश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः
90 ॐ दासप्राणश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ८
91 ॐ प्राणाणुत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः ९
92 ॐ जीवकरणत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १०
93 ॐ मुख्यप्राणस्येन्द्रियत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः
94 ॐ प्रपञ्चस्रष्टृत्वश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः १२

95 ॐ शरीरकारणविषयश्रुत्यविरोधप्रयोज्यसमन्वयगोचराय नमः

ॐ इति न्यायोपेतश्रुतिपरस्पराविरोधप्रयोज्यसमन्वयगोचराय नमः ॐ

॥ इति द्वितीया(अविरोधा)ध्यायस्य चतुर्थः (न्यायोपेतश्रुत्यविरोध)पादः ॥

तृतीयाध्या(साधनाध्या)यः

ॐ वैराग्यादिप्रसादान्तसाधनप्राप्याय नमः ॐ

ॐ भक्तिदार्ढ्यप्रयोजकवैराग्यगम्याय नमः ॐ

96 ॐ भूताबियोगप्रयोज्यसार्थक्यवत्साधनगम्याय नमः १

97 ॐ समस्तभूतावियोगप्रयोज्यसार्थक्यवत्साधनगम्याय नमः २

98 ॐ प्राणगत्यविनाभूतावियोगप्रयोज्यसार्थक्यवत्साधनगम्याय नमः ३

99 ॐ विशेषप्रमाणोक्तभूतावियोगप्रयोज्यसार्थक्यवत्साधनगम्याय नमः ४

100 ॐ श्रद्धाशब्दोपलक्षितभूतावियोगप्रयोज्यसार्थक्यवत्साधन-गम्याय नमः ५

101 ॐ अथहैनमितिश्रूत्युक्तभूतावियोगप्रयोज्यसार्थक्यवत्साधन-गम्याय नमः ६

102 ॐ वैराग्यादिव्यतिरिक्तकर्मागम्याय नमः ७

103 ॐ अवश्यानुष्ठेयवैराग्यादिसाधनगम्याय नमः ८

104 ॐ स्वर्गादीगतिक्लेशिताज्ञानप्रयोज्यवैराग्यगम्याय नमः ९

105 ॐ गतागतक्लेशिताज्ञानप्रयोज्यकाम्यकर्मवैराग्यगम्याय नमः

106 ॐ अज्ञानिमात्रसाधारणगतागतदुःखज्ञानप्रयोज्यवैराग्यगम्याय नमः ११

107 ॐ भगवद्द्वेषादिगतिनित्यनिरयसाधनताज्ञानप्रयोज्यवैराग्य-गम्याय नमः १२

108 ॐ नरकगतसदुःखताज्ञानप्रयोज्यवैराग्यगम्याय नमः १३
109 ॐ गत्यस्वातन्त्र्यप्रयोज्यवैराग्यगम्याय नमः १४
110 ॐ अंधेतमसिदुःखविशिष्टत्वज्ञानप्रयोज्याति-
वैराग्यगम्याय नमः १५
111 ॐ कर्मिगतधूमादिदेवताभावाप्रयोजकताज्ञानप्रयोज्य-
वैराग्यगम्याय नमः १६
112 ॐ स्वर्गावरोहोत्तराचिरगर्भवासप्राप्तिज्ञानप्रयोज्य
वैराग्यगम्याय नमः १७
113 ॐ व्रीह्यादिभावनिरासप्रयोज्यप्रामाण्यवद्वेदविहित-
वैराग्यगम्याय नमः १८
114 ॐ स्वर्गावरोहोत्तरपितृप्रवेशज्ञानप्रयोज्यवैराग्यगम्याय नमः
115 ॐ पितृद्वारा मातृयोनिप्रवेशज्ञानासाध्यातिवैराग्यगम्याय नमः

॥ इति तृतीया(साधना)ध्यायस्य प्रथमः (वैराग्य)पादः ॥

ॐ भक्तिलक्षणसाधनगम्याय नमः ॐ

116 ॐ भक्तिप्रयोजकस्वप्ननियामकत्वमहिम्ने नमः १
117 ॐ भक्तिप्रयोजकस्वप्नतिरोधाननियामकत्वमहिम्ने नमः २
118 ॐ भक्तिप्रयोजकजाग्रत्प्रवर्तकत्वमहिम्ने नमः ३
119 ॐ भक्तिप्रयोजकसुप्तप्राप्यत्वमहिम्ने नमः ४
120 ॐ भक्तिप्रयोजकसुप्तप्रबोधकत्वमहिम्ने नमः ५
121 ॐ भक्तिप्रयोजकसर्वजीवसम्बन्धिसार्वकालिक-
सर्वावस्थानियामकत्वमहिम्ने नमः ३
122 ॐ भक्तिप्रयोजकावान्तरावस्थासंस्थितजीवप्राप्यत्वमहिम्ने नमः
123 ॐ भक्तिप्रयोजकस्वगतभेदशून्यत्वापादक-
निर्दोषत्वाशेषगुणपूर्णत्वमहिम्ने नमः ८

124 ॐ भक्तिप्रयोजकाप्राकृतरूपवत्वमहिम्ने नमः ९
125 ॐ भक्तिप्रयोजकजीवाभेदशून्यत्ववते नमः १०
126 ॐ जीवगतसादृश्याभिव्यञ्जनात्मकफलवद्भक्तिगम्याय नमः ११
127 ॐ भक्तिकर्तव्यताप्रयोजकभक्त्यनुसारिफलदातृत्ववते नमः १२
128 ॐ भक्तिप्रयोजकपालकत्वरूपमहामहिम्ने नमः १३
129 ॐ भक्तिप्रयोजकस्वतोऽव्यक्तत्वमहिम्ने नमः १४
130 ॐ भक्तिप्रयोजकगुणित्ववते नमः १५
131 ॐ भक्तिप्रयोजकालौकिकगुणवत्त्वमहिम्ने नमः १६
132 ॐ भक्तिप्रयोजकब्रह्माद्यानन्दादिबिम्बानन्दादित्ववते नमः १७
133 ॐ भक्तिप्रयोजकपुरुषप्रयत्नजन्यध्यानगोचरविलक्षणत्व-
प्रयुक्ताव्यक्तत्वमहिम्ने नमः १८
134 ॐ भक्तिप्रयोजकसार्वदेशिकसार्वकालिकसृष्ट्यादिकर्तृत्ववते नमः
135 ॐ भक्तिप्रयोजककर्मफलदातृत्वमहिम्ने नमः २०

॥ इति तृतीया(साधना)ध्यायस्य द्वितीयः (भक्ति)पादः ॥

ॐ उपासनालक्षणसाधनगम्याय नमः ॐ

136 ॐ सर्ववेदनिर्णयोत्पाद्यज्ञानविषयाय नमः १
137 ॐ सर्वगुणोपसंहारात्मकोपासनागोचराय नमः २
138 ॐ पुरुषयोग्यताभेदव्यवस्थितोपसंहारानुपसंहार-
योग्यगुणवतेनमः ३
139 ॐ महाफलप्रदबहुगुणोपसंहाररूपोपासनागोचराय नमः ४
140 ॐ सर्वमुमुक्षुसाधारणचतुर्गुणोपासना-
जन्यापरोक्षज्ञानगोचराय नमः ५
141 ॐ प्रियशिरस्त्वादिगुणविषयकसर्वमुमुक्षु-
साधारणोपासनागम्याय नमः ६

142 ॐ चतुर्गुणसर्वगुणेतरदेवकर्तृकोपसंहारयोग्य-
मध्यमगुणाश्रयाय नमः ७

143 ॐ स्वनामरूपसर्वविद्याप्रतिपाद्योपसंहर्तव्यानुपसंहर्तव्य-
सर्वगुणवते नमः ८

144 ॐ आत्मशब्दोदितचतुर्गुणोपासनाधीनापरोक्षज्ञानगोचराय नमः

145 ॐ चतुर्मुखतदितराधिकारिसापेक्षात्मशब्दकारणकाभिधान-
योग्यसर्वगुणाल्पगुणवते नमः १०

146 ॐ ध्यातव्यालौकिकगुणवते नमः ११

147 ॐ स्वसदृशफलदोपासनाजन्यदर्शनविषयाय नमः १२

148 ॐ युगपदात्मशब्दोदितसर्वगुणोपासनागम्याय नमः १३

149 ॐ देवादिमात्रोपास्यसम्भृतिद्युव्याप्तिमते नमः १४

150 ॐ सर्वशाखाविप्रकीर्णापेक्षितसर्वगुणोपासनजापरोक्षगोचराय
नमः १५

151 ॐ यत्याद्ययोग्यहिंसादिफलकसर्वानधिकारिक-
भेदनाद्युपासायोग्याय नमः १६

152 ॐ मुक्तावप्यनुवर्तमानोपासनागोचराय नमः १७

153 ॐ अनियतमुक्तकर्तृककर्मेज्याय नमः १८

154 ॐ ज्ञानोत्तरमोक्षनियमप्रयोज्यनिःशङ्कोपासाविषयाय नमः १९

155 ॐ मौक्तानन्दतारतम्यप्रयोजकोपासनाधिकारि-
नियतिमदुपास्याय नमः २०

156 ॐ अधिकार्यग्रेसरप्राणोपास्यसर्वगुणोपाश्रयाय नमः २१

157 ॐ सर्वाधिकार्युत्तमप्राणोत्तमाय नमः २२

158 ॐ सत्योपर्युपदिष्टविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमा-
हङ्कारात्मस्वरूपाय नमः २३

159 ॐ भगवद्दर्शनसाधनोपासनानधिकारिरमोपास्याय नमः २४

160 ॐ श्रवणमननध्यानात्मकसमस्तोपासनासाध्यापरोक्षगोचराय नमः २५

161 ॐ प्रसादपूर्वकगुरुप्रदानपूर्वकश्रवणादिरूपोपासनागोचराय नमः

162 ॐ बलीयस्तमगुरुप्रसादरूपेतिकर्तव्यतायुक्त-श्रवणाद्युपासनागोचराय नमः २७

163 ॐ पूर्वप्राप्तानधिकावरत्ववच्छिन्नसमग्रानुग्रहकर्तृगुरुप्रसाद-युतोपासागोचराय नमः २८

164 ॐ कर्माद्यसाध्यज्ञानसाध्यप्राप्तिकर्मणे नमः २९

165 ॐ बलवच्छ्रुतिलिङ्गोपपत्तिवचनबोधित-मोक्षसाधनत्ववज्ज्ञानविषयाय नमः ३०

166 ॐ हरिगुरुभक्तिशमदमाद्युपेतगुरुप्रसादयुतोपासागोचराय नमः

167 ॐ विविधोपासनासाध्यविविधज्ञानविषयाय नमः ३२

168 ॐ महरादिमात्रप्रापकसामान्यदर्शनातिरिक्त-बिम्बदर्शनप्राप्याय नमः ३३

169 ॐ भक्तिसामर्थ्याप्रयोज्यस्वप्रसादैकसाध्यापरोक्षगोचराय नमः

170 ॐ इन्द्रार्जुनाद्यंशांश्यभेदप्रयोज्यानादियोग्यतासापेक्षो-पासागोचराय नमः ३५

171 ॐ यथायोग्याङ्गदेवतोपासनायुक्तोपासनागम्याय नमः ३६

172 ॐ भूमत्वेन सर्वमुमुक्षूपास्यानन्दादिमते नमः ३७

173 ॐ अधिकारितारतम्यानुसारप्रतीतिमद्भूमत्वोपासनागोचराय नमः ३८

174 ॐ दुरितादिनिवृत्तिफलकवैकल्पिकनृसिंहाद्युपासनासहित-बिम्बोपासनाप्राप्याय नमः ३९

175 ॐ अर्थादिकामसाधनवैकल्पिकोपासनायोग्य-गुणवद्रूपविशेषाय नमः ४०

176 ॐ देवताधिकारिकतत्तदङ्गप्राप्तिफलकतत्तदङ्गाश्रितत्वो-
पासागोचराय नमः ४१
177 ॐ सर्वशाखास्वनुक्तत्वप्रयुक्तसर्वोपास्यताहीना-
ङ्गाश्रितत्वोपासागोचराय नमः ४२

॥ इति तृतीया(साधना)ध्यायस्य तृतीयः (उपासना)पादः ॥

ॐ अपरोक्षज्ञानाख्यसाधनगम्याय नमः ॐ

178 ॐ सर्वपुरुषार्थसाधनत्वमहिमोपेतज्ञानविषयाय नमः १
179 ॐ सर्वानधिकारिकत्वमहिमोपेतज्ञानगोचराय नमः २
180 ॐ दौर्लभ्यवत्सम्पूर्णाधिकारविषयज्ञानप्राप्याय नमः ३
181 ॐ असत्प्रवृत्तावपि मोक्षसाधनत्वनियमलक्षणमहिमोपेतज्ञान-
साध्यप्राप्तिकर्मणे नमः ४
182 ॐ योग्यैकसाध्यत्वमहिमोपेतज्ञानसाध्यप्राप्तिकर्मणे नमः ५
183 ॐ देवादिपदाकांक्षाशून्यैरेव प्राप्यत्वमहिमोपेतज्ञानप्राप्याय
नमः ६
184 ॐ अस्वामिनोऽपि सन्निधिमात्रेण फलदानरूपमहिमोपेत-
ज्ञानप्राप्याय नमः ७
185 ॐ यतीनामेव ज्ञानाधिकारातिशयप्रयुक्तकर्माधिकाति-
शयोपेतज्ञानप्राप्याय नयः ८
186 ॐ अतिगोप्यत्वमहिमोपेतज्ञानसाध्यप्राप्तिमते नमः ९
187 ॐ प्रतिबन्धाभावे साधनसम्पत्तिजन्मन्येवोदयव-
ज्ज्ञानसाध्यप्राप्तिमते नमः १०
188 ॐ स्वोत्पत्तिजन्मानन्तरमेव प्रतिबन्धाभावे
मुक्तिसाधनत्वमहिमोपेतज्ञानविषयाय नमः ११

॥ इति तृतीया(साधना)ध्यायस्य चतुर्थः (ज्ञान)पादः ॥

चतुर्थोऽध्यायः (फलाध्यायः)

ॐ स्वदर्शनसाध्यस्वप्रसादद्वारकस्वप्राप्तिमते नमः ॐ

ॐ कर्मक्षयसाधनापरोक्षज्ञानविषयाय नमः ॐ

189 ॐ अवश्यम्भाविनित्यशःकार्यश्रवणाद्यावृत्तिसाध्यज्ञान-
गोचराय नमः १

190 ॐ नित्यशः कर्तव्यस्वनिष्ठात्मत्वोपासनासाध्य-
ज्ञानगोचराय नमः २

191 ॐ आवश्यकविष्णुप्रतीकोपासनवर्जनप्रयोज्य-
सर्वस्वामित्वोपासनसाध्यज्ञानगोचराय नमः ३

192 ॐ आवश्यकर्तव्यब्रह्मत्वोपासनासाध्यदर्शनविषयाय नमः ४

193 ॐ तत्तदङ्गाश्रितत्वेन देवतोपासनासाध्यापरोक्षविषयाय नमः ५

194 ॐ आसनादिनियमपूर्वकध्यानसाध्यज्ञानविषयाय नमः ६

195 ॐ प्रायणाख्यमोक्षपर्यन्तं ध्यानसाध्यज्ञानविषयाय नयः ७

196 ॐ कर्मक्षयलक्षणफलसिद्धिसम्पादकज्ञानविषयाय नमः ८

॥ इति चतुर्था(फला)ध्यायस्य प्रथमः (कर्मक्षय)पादः ॥

ॐ देवतासम्बन्धिस्वोत्तमदेहलयतदन्यसम्बन्धिब्रह्म
नाड्युत्क्रमणैतदुभयसाधनज्ञानविषयाय नमः ॐ

197 ॐ वाचो मनसि लयप्रयोज्यस्वप्राप्तिमते नमः १

198 ॐ मनसः प्राणे लयप्रयोज्यस्वप्राप्तिमते नमः २

199 ॐ स्वस्मिन् प्राणलयप्रयोज्यस्वप्राप्तिमते नमः ३

200 ॐ समस्तभूतेषु देवतालयप्रयोज्यस्वप्राप्तिमते नमः ४

201 ॐ अग्नावेव सर्वदेवतालयासम्भवप्रयुक्तसर्वभूताधिकरणक-
लयप्रयोज्यस्वप्राप्तिमते नमः ५

202 ॐ नित्यमुक्तप्रकृतिलयाधिकरणाय नमः ६

203 ॐ मोक्षे चतुर्मुखेतरदेवैरपि प्राप्याय नमः ७
204 ॐ मुक्तावपि स्वाधीनदेवताकाय नमः ८
205 ॐ अज्ञमरणविलक्षणज्ञानिमनुष्यसम्बन्धिदेहोत्क्रमण-
प्रयोज्यमुक्तिदात्रे नमः ९
206 ॐ अवश्यकर्तव्यगत्यनुस्मरणसाध्यस्वप्राप्तिमते नमः १०

॥ इति चतुर्थ(फला)ध्यायस्य द्वितीयः (उत्क्रांति)पादः ॥

ॐ ब्रह्मनाड्युत्क्रान्तज्ञानिसम्बन्ध्यर्चिरादिमार्गप्राप्याय नमः ॐ

207 ॐ अर्चिःप्राथम्यकमार्गगम्याय नमः १
208 ॐ द्वितीयप्राप्यवायुकमार्गगम्याय नमः २
209 ॐ संवत्सरानन्तरप्राप्यतटित्कमार्गगम्याय नमः ३
210 ॐ द्वितीयप्राप्यातिवाहिकवायुमन्मार्गगम्याय नमः ४
211 ॐ अन्तिमप्राप्यमुख्यवायुमन्मार्गगम्याय नमः ५
212 ॐ ज्ञान्यनुस्मरणीयगम्यरूपपरब्रह्मणे नमः ६

॥ इति चतुर्थ(फला)ध्यायस्य तृतीयः (मार्ग)पादः ॥

ॐ चतुर्मुखेन सह स्वप्राप्तिमतां भोगप्रदाय नमः ॐ

213 ॐ मुक्तानां स्वानतिक्रमेण स्वसमीप एव भोगदाय नमः १
214 ॐ सौषुप्तिकाहरहःप्राप्तिविलक्षणमुक्तिकालीनप्राप्तिमतामेव
सम्यक् स्वरूपानन्दाभिव्यक्तिप्रदाय नमः २
215 ॐ मुक्तप्राप्यपरंज्योतिःस्वरूपपरब्रह्मणे नमः ३
216 ॐ सायुज्यभाजामपि स्वभुक्तभोगभोक्तृत्वप्रयुक्त-
सर्वभोक्तृत्ववते नमः ४
217 ॐ मुक्तानां चिद्देहेन भोगभोक्तृत्वसामर्थ्यप्रदाय नमः ५
218 ॐ सङ्कल्पमात्रसाध्यभोगभोक्तृमुक्तसङ्घपरिवृताय नमः ६

219 ॐ स्वाधमनियामकराहित्येन भोगवन्मुक्तसङ्घपरिवृताय नमः ७
220 ॐ बाह्यदेहराहित्यप्रयुक्तनिर्दुःखभोगानुभववन्मुक्त-
सङ्घपरिवृताय नमः ८
221 ॐ जगत्सृष्ट्यादीतरसर्वकामावाप्तिमन्मुक्तसङ्घपरिवृताय नमः ९
222 ॐ वृद्धिह्रासरहितैकप्रकारानन्दानुभवितृमुक्तगण-
निषेविताय नमः १०
223 ॐ पुनरावृत्तिशून्यस्वप्राप्तिवन्मुक्तौघवृताय नमः ११

ॐ विरक्तिभक्त्युपास्तिजनितस्वसाक्षात्कारोदितस्वप्रसाद साध्याशेषपुरुषार्थप्रवरकैवल्यप्राप्तिसाधनाशेषगुण-पूर्णत्वनिर्दोषत्वोभयप्रकारकमननरूपजिज्ञासागोचर-परमङ्गलमूर्तिश्रीमन्नारायणाय नमः ॐ

॥ इति चतुर्था(फला)ध्यायस्य चतुर्थः (भोग)पादः ॥

॥ इति श्रीमद्ब्रह्मसूत्राधिकरणप्रतिपाद्यार्थवत्तया नारायणनमनं कृतमित्यशेषमतिमङ्गलम् ॥

॥ इति श्रीमत्कविकुलतिलक श्रीमद्वादिराजयतिकृता श्रीमद्ब्रह्मसूत्रार्थनिबद्धनामावलिः समाप्ता ॥

## ॥ इति श्रीवादिराजयतिकृता अधिकरणनामावलिः ॥

॥ श्रीकृष्णार्पणमस्तु ॥



# 4. श्रीसुधीन्द्रतीर्थश्रीपादकृत ब्रह्मसूत्रन्यायसंग्रहः

श्रीशं श्रीमध्वमौनींद्रानानम्याखिलसद्गुरून् ।
कॢप्त्यर्थं क्रियते ब्रह्मसूत्रेषु न्यायसंग्रहः ॥ १ ॥

जीवान्यद्ब्रह्म जिज्ञास्यं[१] सृष्ट्याद्यष्टविधायि यत्[२] ।
[३]शास्त्रैकगम्यं तद् ब्रह्मोपक्रमादिसमन्वयात्[४] ॥ २ ॥

नावाच्यमीक्षणीयत्वाद्[५] ब्रह्मानंदमयादिकम्[६] ।
अन्तस्स्थ[७]मभिधचारादे[८]राकाशोऽनंततादितः ॥ ३ ॥

प्राणः[९] श्रीलक्ष्म्यधीशत्वाज्ज्योतिः[१०] कर्णादिदूरतः ।
गायत्री[११] त्राणगानादेः प्राणो[१२] देहरथादितः (ॐ) ॥ ४ ॥

द्वादशाद्याद्यांघ्रिनयास्तद्द्वितीये तु सप्त ते ।
[१]सर्वगो(त्र) ब्रह्मशब्दादेरत्ता[२] सर्वादनाद्धरिः ॥ ५ ॥

ऋतं[३] पिबंतौ [४]हृत्स्थत्वादमृतत्वादितोऽतरः ।
[५]अंतर्याम्यंतरादेः सोऽदृश्यादिः[६] परविद्यतः ॥ ६ ॥

[७]वैश्वानरश्चात्मशब्दात् (ॐ) [१]द्युभ्वादेराश्रयोऽप्यतः ।
[२]भूमा पूर्णसुखादे[३]रक्षरमंबरपूर्वधृत् ॥ ७ ॥

[४]सदीक्षितृत्वाद्हृत्खस्थो[५] हतपाप्मत्वपूर्वकैः ।
[६]कथंचित्त्वानुकूल्येन ग्राह्यं सर्वप्रकाशनात् ॥ ८ ॥

ईशानो[७] वामनश्रुत्या देवा[८] विद्याधिकारिणः ।
नासंस्कारादितः[९] शूद्राः [१०]कंपनाद्वज्रमीश्वरः ॥ ९ ॥

---

(ॐ) पादसमाप्तिसूचना ।

ज्योतिः[११] सावधृतिश्रुत्याऽऽकाशो[१२] नामाद्यभावतः ।
स्वप्नादिदृगसंगत्वाद्ब्राह्मणः[१४] पतिपूर्वतः (ॐ) ॥ १० ॥

नयाश्चतुर्दशाद्यस्य तृतीये षट् तदुत्तरे ।
[१]अव्यक्तं तत् स्वतंत्रत्वाज्ज्यो[२]तिस्तावा इति श्रुतेः ॥ ११ ॥

[३]रूपनानात्वतः [४]पंचावांतरं कारणं च सः ।
प्रकृतिश्च[५] प्रतिज्ञादेः [६]शून्यादिश्चोक्तहेतुतः (ॐ) ॥ १२ ॥

आद्याध्यायगता न्यायाः धी[९]गाः[३][1] सूत्राणि मा[५]ल[३]याः[१][2]
जिज्ञास्ये जीवभेदायानंतसद्गुणलक्षणम् ॥ १३ ॥

ब्रह्मेत्युक्तं तत्प्रसिध्यै जन्माद्यस्येति सूत्रितम् ।
अनतिव्याप्तये तस्य शास्त्रयोनित्वमीरितम् ॥ १४ ॥

तल्लक्षणद्वयोपेते मुख्याशेषागमार्थता ।
समोक्तोपक्रमादिस्तद्धेतुस्तुर्ये प्रतिश्रुतः ॥ १५ ॥

समर्थसिद्ध्यै वाच्यत्वगतिसाम्ये निरूपिते ।
पंचमेऽथ प्रतिज्ञातसमन्वयसमर्थनम् ॥ १६ ॥

शब्दाश्चतुर्विधास्तत्रान्यत्रैव चोभयोः ।
प्रसिद्धा इति ते सर्वे नामलिंगात्मना द्विधा ॥ १७ ॥

तत्रप्रसिद्धो विष्ण्वैकनिष्ठो विष्ण्वादिगीर्यथा ।
तदेकनिष्ठतासिद्धेर्न कार्यस्तत्समन्वयः ॥ १८ ॥

यत्रान्यवृत्तिरेकैव समन्वयविरोधिनी ।
उभयत्र प्रसिद्धं तदक्षरादिवचो यथा ॥ १९ ॥

ब्रह्मवृत्त्यन्यवृत्ती द्वे विरोधिन्यौ समन्वये ।
यत्रान्यत्र प्रसिद्धं तदिंद्राकाशादिगीर्यथा ॥ २० ॥

---

[1] ३९ [2] १३५

उक्तद्वयं ब्रह्मवृत्तौ बाधकं च त्रयं यदा ।
अन्वत्रैव प्रसित्धं तद्दुःखिबद्धादिगीर्यथा ॥ २१ ॥

आपातरूढिरहितधर्मद्वारा च धर्मिगम् ।
लिंगमन्यत् ततो नामांतर्यामींद्रादिगीर्यथा ॥ २२ ॥

अन्यत्रैव प्रसिद्धानां दुःशकावगतित्वतः ।
सर्वाधिकारवैधुर्याचांत्यांघ्रौ तत्समन्वयः ॥ २३ ॥

अन्येष्वपि महामल्लभीरुभंगनयात् कृतः ।
आद्येऽन्यत्र प्रसिद्धानां नाम्नां तत्रापि मुख्यतः ॥ २४ ॥

अमुख्यत्वादन्यगतलिंगानां तु द्वितीयगः ।
उभयत्र प्रसिद्धानां नामलिंगात्मनामपि ॥ २५ ॥

समन्वयस्तृतीयेंऽघ्रौ कृतोऽत्रैव प्रसंगतः ।
देवशूद्राधिकारैतदभावौ तु विचारितौ ॥
छंदोभिधसमाकर्षौ द्वावन्तर्ग(गु)णकौ नयौ ॥ २६ ॥

॥ इति श्रीविजयींद्रयतिविरचिते श्रीब्रह्मसूत्रन्यायसंग्रहे प्रथमोऽध्यायः ॥

विरोधो युक्तिसमयश्रुतियुक्तियुतागमैः ।
समन्वयेऽपाक्रियते द्वितीयेंऽघ्रिपु च क्रमात् ॥ १ ॥

उक्ते समन्वयेऽत्राविरोधोक्तेस्तस्य हेतुता ।
समन्वयस्य सिद्धचैवाविरोध इति हेतुता ॥ २ ॥

पत्त्यादेरिव भंगेऽश्वगजादीनां प्रवर्तनम् ।
भंगे दुर्बलयुक्त्यादेः समयादेरतिक्रमः ॥ ३ ॥

द्वितीये बहिरंगत्वात् तद्विरोधोऽथवा हृतः ।
स्मृतीनां चतुरात्मत्वात् सर्वादौ तन्निराकृतिः ॥ ४ ॥

नान्यस्मृतिस्तद्विरोधान्मानं[1] नित्या श्रुतिस्तु मा[2] ।
मृदुक्त्याद्यभिमान्यर्थं[3] प्रागभावेन कर्तृता[4] ॥ ५ ॥

[5]न जीवैक्यं वाक्यबलाज्ज्ञेयाऽनन्यस्वतंत्रता[6] ।
[7]जीवोऽकर्ताऽहितकृतेर्नान्यसाम्यं श्रुतेर्हरेः[8] ॥ ६ ॥

[9]न फलार्थेशितुस्सृष्टिर्न वैषम्याद्यपेक्षणात्[10] ।
[11]स्वातंत्र्यात् सर्वगुणयुग्द्वितीयाऽऽद्ये नयाः पयाः[12](ॐ) ॥७॥

नाचेतनं जगत्कर्तृ[1] नेशोऽनुग्रहमात्रकृत्[2] ।
फलाभावान्न [3]सिद्धांतोऽकर्तृ जीवान्वितं जडम्[4] ॥ ८ ॥

प्रधानयुङ् न[5] जीवो वाऽऽरंभोऽणुत्वादितो न[6] किम् ।
[7]नाणुपुंजोऽप्यतत्प्राप्तेर्नासद्धेतुरदर्शनात्[8] ॥ ९ ॥

न ज्ञानताऽस्यादृष्ट[9]त्वान्नादृष्टेः सप्तभंगिता[10] ।
[11]रुद्रो न कर्ता दोषित्वान्न शक्तिः पुरुषायुता[12] (ॐ) ॥१०॥

[1]वियदुत्पत्तिमच्छ्रुत्या [2]वायुश्चाजन्यसंभवात् ।
[3]स्वातंत्र्यान्नेश्वरोत्पत्तिर्वायोर्वा तेजसो जनिः[4] ॥ ११ ॥

[5]आपोऽग्निद्वारतो जन्या अन्नं [6]भूर्बहुयुक्तितः ।
[7]लय ईशादेव लिंगाद् व्युत्क्रमाद्युज्यते लयः ॥ १२ ॥

[8]विज्ञानमनसोश्चैवं नाश्रुतेर्ब्रह्मणो लयः[9] ।
[10]ब्रह्मजन्यः श्रुतेर्जीव उत्क्रांत्यादेरणुश्च सः[12] ॥ १३ ॥

जीवोऽभिन्नांशः पार्थक्यः ब्रह्मान्यश्चोपदेशतः ।
नित्योपाधित्वतो नित्योऽभिव्यक्तेर्धीसुखात्मकः ॥ १४ ॥

[17]कर्ता शास्त्रस्यार्थवत्त्वादंशोऽ[18]भेदभिदा श्रुतेः ।
[19]विद्यादिभेदाद्देवादिनया एकोनविंशतिः (ॐ) ॥ १५ ॥

[1]श्रुतेरेवेंद्रियोत्पत्तिर्विशिष्य श्रवणान्मनः[2] ।
मनोजन्या श्रुतेर्वाक् च[3] धींद्रियेष्वेव सप्तता[4] ॥ १६ ॥
व्याप्तेः प्रकाशतोऽणुत्वं [5]मुख्यश्चोत्पत्तिमान् [6]श्रुतेः ।
[7]प्राणवच्चेशवशगो मनोवत् पंचरूपवान्[8] ॥ १७ ॥
बहिर्व्याप्नोति [9]देहेऽणुर्न प्राणा जीवसाधनम्[10] ।
[11]श्रुत्याऽनिंद्रियता मुख्ये[12] संज्ञामूर्तिकृदीश्वरः
[13]आत्मदेहेऽधिकं त्वेकं नयास्तुर्ये त्रयोदश । (ॐ) ॥ १८ ॥

॥ इति श्रीब्रह्मसूत्रन्यायसंग्रहे श्रीविजयींद्रयतिविरचिते द्वितीयोऽध्यायः ॥

जिज्ञासासूत्रगब्रह्मशब्दार्थः प्राङ् निरूपितः ।
अथेत्याद्यवशिष्टार्थ उत्तरद्विकगोचरः ॥ १ ॥
एवं च सिद्धसाध्यार्थं द्विकद्वयमिति स्थितिः ।
तृतीये साधनं साध्यं चतुर्थे तत्क्रमात् क्रमः ॥ २ ॥
वैराग्यभक्त्युपासातद्दृष्टिमाहात्म्यमंघ्रिषु ।
वैराग्याद्भक्तिदार्ढ्ये सत्युपासाऽतोऽपरोक्षधीः ॥ ३ ॥
पूर्वपूर्वस्य हेतुत्वमुत्तरत्रेति तत्क्रमः ।
[1]भूतयुग्यातिदेहार्थं प्रश्नादेर्मूर्तिमान् पुमान् ॥ ४ ॥
[2]त्र्यात्मभूयस्त्वतोऽप्शब्दस्तद्व्याप्तप्राणयुग्गतेः ।[3]
[4]अंशतोऽग्न्यादिगत्युक्तिः श्रद्धाऽऽपोग्रावथादिमे[5] ॥ ५ ॥
[6]अर्थादुक्तेश्च तत्सिद्धिः कर्म्यमुख्यामृतो मतः ।[7]
[8]श्रुतेनाशेषभुक् स्वर्गेऽन्यथा चागतिरागमात्[9] ॥ ६ ॥
[10]गतागती कर्मणैव चानिष्टादिकृतामपि ।[11]
[12]सप्तेति नित्यनिरयोऽत्रापीशव्यापृतिः श्रुतेः[13] ॥ ७ ॥

[१४]नैतयोरिति साध्योक्तिर्नाहेतोः ससुखं तमः[१५] ।
[१६]नाविद्वत्त्वाध्दूमतादि न चिराद्गर्भभाक् श्रुतेः[१७] ॥ ८ ॥

[१८]व्रीह्यादिस्थितिरेवोक्तेः पितरं प्रविशेत् पुरा [१९]
[२०]योनिं प्रविश्यैव देही वैराग्यांघ्रौ तु विंशतिः (ॐ) ॥ ९ ॥

ईशसृष्टः श्रुतेः स्वप्नः[१] तत एव तिरोहितः[२] ।
[३]न कालाज्जाग्रदप्यस्मात् सुप्तिर्नाडीस्थितात्मनि[४] ॥ १० ॥

[५]प्रबोधोऽप्यत एवास्मात् सर्वावस्थाः सदा हरेः[६] ।
[७]मोह ईशेऽर्धप्रवेशो नेशरूपेषु भिन्नता[८] ॥ ११ ॥

[९]ईशोऽप्राकृतरूपोऽन्यो जीवो यत्प्रतिबिंबकः[१०] ।
[११]नाभक्तौ साम्यसुव्यक्तिस्तद्वैचित्र्यं तथा फलात्[१२] ॥ १२ ॥

[१३]पाताऽन्नदानादिनेशोऽव्यक्तोऽप्याविर्भवेत् स्वतः[१४] ।
[१५]कालवत् स्वानन्यधर्मा लौकिकास्तेऽन्यतादितः[१६] ॥ १३ ॥

[१७]स्थानभेदेऽप्याभिन्नांशो ध्येयादन्यो निषेधतः[१८] ।
[१९]सदा सर्वं चेशसृष्टं फलं चास्माद्धि युज्यते[२०] ॥ १४ ॥

भक्त्यंघ्रौ विंशति नया (ॐ) द्विचत्वारिंशदुत्तरे ।
[१]सर्ववेदैर्विचार्योऽसौ विधेर्ध्येयोऽखिलैर्गुणैः[२] ॥ १५ ॥

[३]केषांचिदेव माहात्म्यात् फलं तेषामतो महत्[४] ।
[५]आनंदाद्यास्तु सर्वेषां प्रियशीर्षादिकं[६] तु न ॥ १६ ॥

[७]चतुः सर्वेतरैर्दैवैर्ध्यानाध्याने द्वयोर्मते[८] ।
[९]आनंदाद्यप्यात्मशब्दो यथार्थं सोऽपि तान् वदेत्[१०] ॥ १७ ॥

ध्येयास्तेऽलौकिकाः [११]कार्या वाण्या सामान्यतः[१२] क्रियाः ।
[१३]युगपन्नात्मशब्दास्ते न संभृत्यादि निर्जरैः[१४] ॥ १८ ॥

[१५]नैकैकत्रापक्षितोक्तिर्यत्त्यचिंत्यं छिदादिकम्[१६] ।
[१७]स्वेच्छयोपासते मुक्ताः कर्माण्यातन्वते न वा[१८] ॥ १९ ॥

[१९]नापरोक्षदृशोऽमुक्तिः साऽधिकारानुसारिणी[२०] ।
[२१]प्राणः सर्वाधिकार्यग्र्योऽध्याहृतेरीश्वरावरः[२२] ॥ २० ॥

[२३]सत्यादिरीश एवैकोऽबद्धैव श्रीर्भजत्यमुम्[२४] ।
[२५]श्रवणाद्यखिलं दृष्ट्यै तदंगं गुर्वनुग्रहः[२६] ॥ २१ ॥

[२७]स्वयत्नात् स बली लिंगैः विकल्पः प्राक्समे गुरौ[२८] ।
[२९]दृष्ट्यैवावधृतेर्मुक्तिः श्रुत्यादिः [३०]प्रबलोऽत्र च ॥ २२ ॥

[३१]भक्त्याद्यपि ज्ञानहेतुरीक्षा नानैव मोक्षदा[३२] ।
[३३]बिंबवीक्षैव मोक्षार्था भक्त्या ब्रह्मैव मोक्षदम्[३४] ॥ २३ ॥

[३५]नांश्यन्योंऽशस्तत्तनुस्थोंऽगत्वेनान्यामरार्चनम्[३६] ।
[३७]भूमोपास्योऽखिलैः श्रैष्ठ्यात्तद्धीर्नानाऽधिकारतः[३८] ॥ २४ ॥

[३९]बिंबान्यस्योपास्यतापि काम्योपासा[४०] विकल्पिता ।
[४१]देवाश्रितांगता ध्येया न देवान्यैः सहाश्रुतेः[४२] (ॐ) ॥२५॥

[१]दृष्ट्या सर्वपुमर्थाप्तिः नास्यां सर्वाधिकारिता[२] ।
[३]न साविशेषाद्देवादौ कामचारोऽविधिः [४]स्तुतिः ॥ २६ ॥

[५]नैवायोग्यो लभेतेक्षां नेच्छेद् ब्राह्मपदाद्यपि[६] ।
[७]मुख्यज्ञानफला देवाः न्यासस्सर्वाश्रमोत्तमः[८] ॥ २७ ॥

[९]रहस्येवोपदेशः स्यात् तज्जन्मन्येव नेक्षणम्[१०] ।
[११]मुक्तिश्चैवं ज्ञानजन्मन्येकादश तुरीयगाः (ॐ) ॥ २८ ॥

॥ इति श्रीब्रह्मसूत्रन्यायसंग्रहे श्रीविजयींद्रयतिविरचिते तृतीयोऽध्यायः ॥

---

कर्मक्षयौ देवलयान्योत्क्रांती गम्ययुक्स्मृतिः ।
भोगश्चोक्ता मोक्षभेदास्तुर्येऽध्रिषु जनिक्रमात् ॥ १ ॥

मोक्षांतरंगताज्ञप्त्या आदावत्र निगद्यते ।
आवश्यकं नित्यमपि यत्कार्यं ज्ञानसाधनम् ॥ २ ॥

प्रायिकत्वात् प्रधानत्वान्मोक्षाध्यायादिताऽनयोः ।
[1]श्रुत्याद्यात्र्त्यमभ्यासात् स्वामित्वोपासनं[2] सदा ॥ ३ ॥

[3]न ब्रह्मताऽन्यदेवेषु ध्येयोत्कर्षाच्च साऽऽत्मानि ।
[4]स्वोत्पादकांगता देवैरासीनेनैव[5] संभवात् ॥ ४ ॥

[6]आमुक्त्यावश्यकं ध्यानमारब्धान्यक्षयाद्यतः[7] ।
चतुर्थाद्ये नया अष्टौ तद्द्वितीये तु ते दश ॥ ५ ॥

दृष्ट्यादेर्वाङ्मनोलीना [1]मनः प्राणे[2] तदुत्तरात् ।
प्राणः [3]परस्मिन् श्रुत्यादेर्भूतेष्वन्ये [4]श्रुतेः सुराः ॥ ६ ॥

[5]नाग्नावेव श्रुतेः सर्वे न मुक्तत्वाच्छ्रियो लयः[6] ।
[7]प्राणद्वारेशलीनास्ते सत्येच्छाश्चेशयंत्रिताः[8] ॥ ७ ॥

[9]ज्ञान्युत्क्रांतिर्नाज्ञवत् स्याद् भाव्येविद्यागतिस्मृती[10] । (ॐ)
[1]मार्गोर्चिरादिरेवैकोऽर्चिषा वायुमहस्ततः[2] ॥ ८ ॥

[3]तटितो वरुणः पश्चात् प्राक् प्राणो ह्यातिवाहिकः[4] ।
[5]मुख्यवायुर्नयेद्ब्रह्मा प्रतीकालंबनात् परम्[6] (ॐ) ॥ ९ ॥

नयास्तुर्यतृतिये षडेकादश तदुत्तरे ।
[1]मुक्तो भुंक्तेऽविहायेशं[2] जक्षन्नान्योह्यसंभवात्[3] ॥ १० ॥

ज्योतिः प्रकरणाच्चेशः सुखभुक्तैकभुक्सयुक्[4] ।
सयुजो [5]ब्रह्मचिद्देह संकल्पादेव भोगिनः[6] ॥ ११ ॥

[७]नोत्तमान्याधिपतयो मुक्ताः स्वेच्छात्तविग्रहाः[८] ।
[९]न जगद्व्यापृतिजुषो न वृद्धिह्रासभागिनः[१०] ॥ १२ ॥
नावर्तते विमुक्तास्ते सत्यसंकल्पतादितः । (ॐ)
चतुरध्यायगा न्याया [1]धीगाः मेशा बुधा मगाः ॥ १३ ॥
[2]अर्कादृींद्रारिरुद्रार्कधीयोति [3]जगती [4]नखाः ।
[5]नखरम्भेशाष्टदशारीशात् सर्वाघ्रिगा नयाः ॥ १४ ॥
[6]योगीरागगवीधीराजालमेघागमागिरः ।
[7]धीरारवाजितपणाधियो [8]रुद्रास्तयोगिरः ॥ १५ ॥
[9]शंबयोधीमयोध्यायसूत्राणां [10]नाधियोनदाः ।
[11]श्रीरुद्रा ब्रह्ममीमांसान्यायाः सूत्राणि[12] भूषणम् ॥ १६ ॥
श्रीमदानंदतीर्थेड्यश्रीशप्रीत्या अकार्ययम् ।
सुधींद्रयतिना ब्रह्मसूत्राणां न्यायसंग्रहः ॥ १७ ॥

॥ इति श्रीविजयींद्रयतिर्थविरचिते श्रीब्रह्मसूत्रन्यायसंग्रहे चतुर्थोऽध्यायः ॥

# इति श्रीसुधींद्रतीर्थश्रीपादकृता ब्रह्मसूत्रन्यायसंग्रहः

॥ श्रीकृष्णार्पणमस्तु ॥

---

(अत्र चिह्निताः अंकाः कटपयादिभंग्या "अंकानां वामतोगति" रित्यादिनैव द्रष्टव्याः)

---

1 ९ ३ ५ ५ ३ ९ ५ ३
2 १ २ ७ १ ४ ६ १ १ १ २ ९ १
3 १ ३
4 ० २
5 ० २ २ ४ १ १ ८ १ ० ६ १ १
6 १ ३ २ ३ ३ ४ ९ ८ २ ३ ५ ४
३ ५ २ ३ ७
7 ९ २ २ ४ ८ ६ १ ५ ९ १
8 २ २ ६ १ ३ २
9 ५ ३ १ ९ ५ १
10 ० ९ १ ० ८
11 २ २ २
12 ४ ६ ५

# 5. श्रीसुधींद्रतीर्थकृता ब्रह्मसूत्राधिकरणरत्नमाला

## प्रथमाध्यायः

### १. अन्यत्रप्रसिद्धनामपदः

ज्ञानार्थमर्थितः श्रीशो ब्रह्मरुद्रादिभिः सुरैः ।
व्यासो भूत्वा समुत्सन्नान् व्यञ्जयन् व्यभजच्छ्रुतीः ॥ १ ॥

तदर्थसंनिर्णयाय शास्त्रं शारीरकाह्वयम् ।
चक्रे चतुर्लक्षणेतं कलाचरणसंयुतम् ॥ २ ॥

शतद्वयेन विंशत्या द्वाभ्यामपि समन्वितम् ।
नयानि(नयानां) भूषणैः सूत्रैः संयुतं भगवान् प्रभुः ॥ ३ ॥

तत्र शास्त्रारंभणीयत्वोपयुक्ततया नये ।
प्रथमे शास्त्रजिज्ञासाकार्यतामाह शास्त्रकृत् ॥ ४ ॥

द्वितीये तु विचार्यस्य हरेर्लक्षणमब्रवीत् ॥ २ ॥
तदतिव्याप्तिनिर्हृत्यै मानमाह तृतीयके ॥ ३ ॥

ततः पुनरतिव्याप्तिनिरासायैव मापतेः ।
कारणत्वेन शास्त्रैकयोनित्वं समसीषधत् ॥ ४ ॥

संशब्दप्रोक्तावाच्यत्वं सर्वशास्त्रप्रमाणताम् ।
अपीक्षतिनये प्राह पंचाधिकरणीति हि ॥ ५ ॥

ततस्त्वध्यायशेषस्य(स्तु) प्रतिज्ञातसमन्वयम् ।
प्रवृत्तः संस्पष्टयितुं तत्रानंदमये नये ॥ ॥ ६ ॥

अन्यत्रगानां नाम्नां तु गुणिसामान्यवाचिनाम् ।
गुणसंवाचकानां च हरावाह समन्वयम् ॥ ७ ॥

ततोऽतःस्थत्वसल्लिंगद्वारा विष्णौ समन्वयम् ।
अधिदैवगतेंद्रादिसर्वनाम्नां ततः परम् ॥ ८ ॥

अधिभूतगताकाशपूर्वनामततेस्ततः
अध्यात्मगप्राणपूर्वनाम्नामाह समन्वयम् । ॥ ९ ॥

दशमे सूक्तगाशेषज्योतिरादिपदावलेः ।
समन्वयं हरावाहैकादशे तु नयेऽब्रवीत् ॥ १० ॥

अधिवेदगगायत्रीपूर्वनामततेर्हरौ ।
समन्वयम् द्वादशेऽन्यप्रापकैर्बहुभिर्नये । ॥ ११ ॥

लिंगैर्युतानां नाम्नां तु हरावाह समन्वयम्
इति प्रथमपादेऽस्मिन् नया द्वादश कीर्तिताः ॥ १२ ॥

## २. अन्यत्रप्रसिद्धलिंगपादः

अथान्यत्रागलिंगानामाह विष्णौ समन्वयम् ।
पादे द्वितीये तत्राद्ये नये भावात्मकस्य तु । ॥ १ ॥

सर्वत्रावस्थितत्वस्य लिंगास्याह समन्वयम्
सर्वसंहर्तृत्वरूपक्रियालिंगसमन्वयम् । ॥ २ ॥

नये द्वितीये प्रोवाच तृतीये तु नयेऽब्रवीत् ।
सत्कर्मफलभोक्तृत्वक्रियालिंगसमन्वयम् ॥ ३ ॥

चक्षुरंतःस्थितत्वाख्यभावयुक्तस्य तत्परे ।
रतिक्रियात्मलिंगस्य नये प्राह समन्वयम् ॥ ४ ॥

पंचमेंऽतःस्स्थितत्वाख्यभावयुक्तस्य माधवे ।
नियंतृत्वक्रियारूपलिंगस्याह समन्वयम् ॥ ५ ॥

षष्टे भावात्मलिंगस्य हरौ प्राह समन्वयम्
बहुलिंगसमायुक्ता या हि वैश्वानरश्रुतिः । ॥ ६ ॥

तस्याः समन्वयं प्राह हरावंत्ये हि सूत्रकृत्
इति सप्त नयाः पादे द्वितीयेऽस्मिन् प्रकीर्तिताः ॥ ७ ॥

## ३. उभयत्रप्रसिद्धलिंगनामपादः

उभयत्रप्रसिद्धानां लिंगनाम्नां ससन्वयम् ।
शब्दानामाह पादेऽस्मिन् हरौ तत्रादितो नये ॥ ॥ १ ॥

सर्वाश्रयत्वलिंगस्य भूमनाम्नो द्वितियके ।
समन्वयं हरावाह तृतीये त्वक्षरश्रुतेः ॥ २ ॥

तुर्ये समन्वयं प्राह सृष्टिस्थानगसच्छ्रुतेः
हृत्पद्मस्थत्वलिंगस्य तदंतरनये हरौ ॥ ३ ॥

आनुकूल्येन यद्गृह्यमाणत्वं तस्य केशवे ।
षष्ठे नये तु लिंगस्यावदभ्यासः समन्वयम् ॥ ४ ॥

सप्तमे त्वीशाननाम्नो हरावाह समन्वयम् ।
वेदविद्यासु देवानामधिकारोऽस्ति सर्वशः ॥ ५ ॥

इत्यष्टमे नये प्राह प्रसंगादेव सूत्रकृत्
नवमे तदभावं च शूद्राणामाह सूत्रकृत् ॥ ६ ॥

दशमे वज्रनाम्नस्तु हरावाह समन्वयम्
एकादशनये प्राह ज्योतिर्नाम्नः समन्वयम् ॥ ७ ॥
तदुत्तरनये प्राहाकाशनाम्नः समन्वयम्
त्रयोदशे तु स्वप्नादिद्रष्टृत्वस्य समन्वयम् ॥ ८ ॥
लिंगस्य भगवानाह चरमे ब्रह्मणः श्रुतेः
इत्थं चतुर्दश नयाः पादे प्रोक्तास्तृतीयके ॥ ९ ॥

## ४. अन्यत्रैव प्रसिद्धलिंग—नामपादः

अन्यत्रैव प्रसिद्धानां द्विविधानां समन्वयम् ।
शब्दानां भगवानाह विष्णौ पादे चतुर्थके ॥ १ ॥
ऐश्वर्यरोधिदुःखित्वाद्यर्थशब्दसमन्वयम् ।
भगवान् सूत्रकृत् तत्र प्राह प्रथमके नये ॥ २ ॥
द्वितीये सर्वशब्दानां पदवर्णादिरूपतः ।
समन्वयं हरावाह तृतीये तु नये हरिः । ॥ ३ ॥
बहुत्ववाचिशब्दानां चतुर्थे सूत्रकृन्नये ।
अवांतरं कारणत्वं यल्लिंगं तस्य वाऽब्रवीत् ॥ ४ ॥
तादृशाकाशादिनाम्नामथवाऽऽह समन्वयम् ।
न्यायभेदेन सर्वेषां शब्दानामाह पंचमे ॥ ५ ॥
पुनः समन्वयं विष्णौ षष्ठे स्त्रीलिंगिनामपि ।
निषेधवाचिनां नाम्नां सप्तमे तु समन्वयम् ॥ ६ ॥
आह तुर्ये तु चरणे नयाः सप्त प्रकीर्तिताः ॥
अनंतशब्दवाच्यत्वात् सिद्धोऽनंतगुणो हरिः ॥ ॥ ७ ॥

॥ इति श्रीब्रह्मसूत्राधिकरणरत्नमालायां प्रथमाध्यायः ॥

## ॥ द्वितीयाध्यायः ॥

### १. युक्त्यविरोधपादः

पूर्वेण लक्षणेनोक्ते विरोधोऽत्र निरस्यते ।
समन्वये युक्तिमत्ता श्रुतिन्याययुतागमैः ॥ ॥ १ ॥

आद्ये युक्तिविरोधस्तु पादे प्रथमके नये ।
अपस्मृतिविरोधस्तु चातुरात्म्यान्निरस्यते ॥ २ ॥

द्वितीये तु श्रुतिश्रौतस्मृत्यप्रामाण्यसाधिका ।
या युक्तिस्तद्वीरोधस्याभावमाह हि सूत्रकृत् । ॥ ३ ॥

दृढयुक्तिविरोधस्याभावमाह तृतीयके ।
तत्रैव वेदगुणकाभावकर्तृत्वसाधिका ॥ ४ ॥

या युक्तिस्तद्विरोधस्याभावमाह चतुर्थके
प्रबला श्रुतिसिद्धत्वाद्विष्णुकर्तृत्वबाधने ॥ ५ ॥

या युक्तिस्तद्विरोधस्याभावमाह हि पंचमे ।
स्वतंत्रसाधनान्यत्वसाधिका बहुयुक्तयः ॥ ६ ॥

यास्ताद्विरोधस्याभावमाह षष्ठे नये हरिः ।
वेदानुभवसंवादी जीवकर्तृत्वसाधिका ॥ ७ ॥

या युक्तिस्तद्विरोधस्याभावमाह हि सप्तमे ।
अनंशस्यापि मेशस्य व्यापारेऽप्येकदेशतः ॥ ८ ॥

व्याघात इति युक्तिर्या सर्वकर्तृत्वरोधिनी ।
हीशस्य तद्विरोधस्याभावमाहाष्टमे नये ॥ ९ ॥

फलाभावात्मिका विष्णोः सर्वकर्तृत्वबाधिका ।
या युक्तिस्तद्विरोधस्याभावं नवमकेऽवदत्[१] ॥ १० ॥

विष्णोः कर्माद्यपेक्षायां दोषः स्यादनपेक्षणे ।
इत्थं बहुमुखेशस्य दृढा कर्तृत्वरोधिनी ॥ ११ ॥
या युक्तिस्तद्विरोधस्याभावं दशम आह हि
समस्तगुणपूर्णत्वे निर्दोषत्वे च मेशितुः ॥ १२ ॥
या युक्तयस्तद्विरोधाभावमंत्ये नयेऽब्रवीत् ।
इति द्वितीयाद्यपादे नया एकादशेरिताः ॥ १३ ॥

## २. समयाविरोधपादः

अथ हैतुकपाष्षण्डसमयापकृतिं प्रभुः ।
द्वितीयस्य द्वितीयांघ्रौ क्रमात् षट्कद्वयेऽकरोत् ॥ १ ॥
निरीश्वरं सांख्यमतमादौ देवो निराकरोत् ।
हीशोपसर्जनं कर्तृप्रधानमिति यन्मतम् ॥ २ ॥
नये द्वितीये भगवान् सूत्रकृत् तन्निराकरोत् ।
तृतीये तु निराचक्रे लोकायतमतं हरिः ॥ ३ ॥
जीवोपसर्जनं कर्तृप्रधानमिति यन्मतम् ।
तच्चतुर्थे निराचक्रे भगवान्सूत्रकृन्नये ॥ ४ ॥
प्रधानगुणको जीवो मुख्यकर्तेति यन्मतम् ।
तत् पंचमें निराचक्रे सूत्रकृद्भगवान् नये ॥ ५ ॥
वैशेषिकमतं षष्ठे निराचक्रे नये हरिः।
सप्तमे वैभाषिकस्य मतं सौत्रांतिकस्य च ॥ ६ ॥
पाषण्डिनोऽणुनिचयं वादिनोऽपाकरोद्धरिः ।
शून्यकर्तृत्ववादं तु निराचक्रेऽष्टमे नये ॥ ७ ॥
विज्ञानकारणमतं नवमेऽपाकरोद्धरिः ।
सर्वप्रकारोपगंतृमतं तु दशमे नये ॥ ८ ॥

निराचक्रे उपांत्ये तु मतं शैवादिकं नये ।
चरमे तु नये दोषविशेषानभिभाषितुम् ॥ ९ ॥

निराचक्रे शक्तिमतं भगवान् सूत्रकृत् पुनः ।
द्वितीयस्य द्वितीयांघ्रौ द्वादशेति नयाः स्मृताः ॥ १० ॥

## ३. श्रुत्यविरोधपादः

अथ श्रुतिविरोधापाकृतिं पादे तृतीयके ।
द्वितीयस्य मिथश्चक्रे हरिः प्रथमके नये ॥ १ ॥

सोत्पत्त्यनुत्पत्तिवचोविरोधाभावमब्रवीत् ।
वायुजन्यजनिश्रुत्योरविरोधं द्वितीयके ॥ २ ॥

ब्रह्मजन्यजनिश्रुत्योरविरोधं तदुत्तरे ।
अविरोधं चतुर्थे तु तेजोजनकवाक्ययोः ॥ ३ ॥

पंचमे त्वाहाविरोधं नयेऽब्जनकवाक्ययोः ।
ता अन्नमभ्द्यः पृथिवीति गिरोरविरोधकम् ॥ ४ ॥

(या युक्तिस्तद्विरोधस्याभावमाह चतुर्थके ।
प्रबला श्रुतिसिद्धत्वाद्विष्णुकर्तृत्वबाधने) ॥ ५ ॥

षष्ठे नयेऽवदद्विष्णुरुक्त्वैवं नयषट्कतः ।
अधिभूताधिदैवीयजन्मश्रुत्यविरोधकम् ॥ ६ ॥

संहारकर्तृवचसोरविरोधं तु सप्तमे ।
प्राहाष्टमेऽधिभूतादिसंहारक्रमवाक्चये ॥ ७ ॥

विज्ञानमनसोश्चैव लयक्रमगिरोर्मिथः ।
अविरोधं नये प्राह नवमे सूत्रकृत् प्रभुः ॥ ८ ॥

दशमे तु नये ब्रह्मलयालयगिरोर्मिथः ।
अविरोधं जीवजन्माजन्मवाचोरथाब्रवीत् ॥ ९ ॥

परिमाणगिरोर्ज्ञस्याविरोधं द्वादशे नये ।
आहैकरूपत्वानेकरूपत्वोक्त्योस्त्रयोदशे ॥ १० ॥

जीवेशभेदाभेदोक्त्योरविरोधं चतुर्दशे ।
अथ ज्ञतदुपाध्योर्जन्यजन्युक्त्योः परस्परम् ॥ ११ ॥

नये पंचदशे प्राह विरोधाभावमीश्वरः ।
ज्ञस्यानंदादिरूपत्वतदभावगिरोर्नये ॥ १२ ॥

षोडशे प्राह कर्तृत्वाकर्तृत्वोक्त्योः शरीरिणः ।
प्राह सप्तदशे ज्ञस्येशांशानंशता गिरोः । ॥ १३ ॥

अष्टादशे नये प्राह विरोधाभावमच्युतः ।
ज्ञस्येशप्रतिबिंबत्वाप्रतिबिंबत्ववाक्ययोः ॥ १४ ॥

विरोधाभावमवदच्चरमे सूत्रकृन्नये ।
द्वितीयस्य तृतीयांघ्रौ नया एकोनविंशतिः ॥ १५ ॥

४. युक्त्युपेतश्रुत्यविरोधपादः

श्रुतीनां न्याययुक्ताभिर्विरोधः श्रुतिभिर्मिथः ।
अपाकृतो सूत्रकृता(करोत् )कारः द्वितीयस्य तु तुर्यके ॥ १ ॥

सोत्पत्तिवाचोऽनुत्पत्तिवाचाऽऽदाववदन्नये ।
अविरोधमुपादानाभावयुक्त्या युजा हरिः ॥ २ ॥

मनोजन्माजन्मवाचोरविरोधं द्वितीयके ।
वाग्जन्माजन्मवचसोरविरोधं तृतीयके ॥ ३ ॥

प्राणसंख्यागिरोस्तुर्ये विरोधाभावमब्रवीत् ।
प्राणाणुत्वानणुत्वोक्त्योरविरोधं च पंचमे ॥ ४ ॥

षष्ठे मुख्यप्राण जन्माजन्मश्रुत्यविरोधकम् ।
तत्स्वातंत्र्यास्वतंत्रत्वगिरोराहाविरोधकम् ॥ ५ ॥

सप्तमे श्रेष्ठतद्दासभाववाचोरथाष्टमे ।
आहाविरोधं प्राणादेरणुतानणुता गिरोः । ॥ ६ ॥

श्रेष्ठस्य नवमे प्राहाविरोधं सूत्रकृन्नये
जीवेशकरणत्वोक्त्योरविरोधं तदुत्तरे । ॥ ७ ॥

चक्षुरादेर्नये प्राह भगवान् सूत्रकृत् प्रभुः
इन्द्रियत्वानिन्द्रियत्ववचसोर्भारतीपतेः । ॥ ८ ॥

एकादशनये प्राहाविरोधं सूत्रकृत् प्रभुः ।
विरिंचविष्णुजन्यत्ववचसोर्नामरूपयोः ॥ ९ ॥

प्राहाविरोधं भगवान् सूत्रकृद् द्वादशे नये ।
आहाविरोधं चरमे एककारणवाक्ययोः ।
द्वितीयस्य तुरीयांघ्रौ नया एवं त्रयोदश ॥ १० ॥

॥ इति ब्रह्मसूत्राधिकरणरत्नमालायां सुधींद्रयतिकृतायां द्वितीयाध्यायः ॥

## ॥ तृतीया(साधना)ध्यायः ॥

### विरक्तिपादः

विचार्य ब्रह्मशब्दार्थमध्यायद्वितयेन तु ।
तृतीये त्वथजिज्ञासापदार्थः प्रविचार्यते ॥ १ ॥

विरक्तिभक्त्युपासाद्यरूपः पादेषु च क्रमात् ।
ज्ञानहेतूपासनांगभक्तिदार्ढ्यार्थमादितः ॥ २ ॥

पादे जीवस्य गत्यादि सूत्रकृत् संन्यरूरुपत् ।
भूतावियोगं जीवस्य तत्रादाववदन्नये ॥ ३ ॥

कृत्स्नभूतावियोगं तु तदुत्तरनयेऽवदत् ।
प्रागुक्तभूतगमनं तृतीये समसीषधत् ॥ ४ ॥

उपपत्त्या प्राणगतिमाक्षिप्यानंतरे नये ।
असीषधत् भूतगतिमाक्षिप्य भगवान् नये ॥ ५ ॥

पंचमे साधयामास षष्ठे भूतगतिं पुनः ।
विशेषश्रुत्यभावेन त्वाक्षिप्य समसीषधत् ।
कर्मणो मुक्तिहेतुत्वं नेति प्राह च सप्तमे ॥ ६ ॥

अष्टमे निःशेषनाशाभावमाह स कर्मणाम् ।
भोगेन नवमे स्वर्गादागतीगतिरीरिता ॥ ७ ॥

गतागतस्य दशमे हरिणा कर्मकार्यता ।
गतागतं पापकृतामप्यस्तीत्युदितं ततः ॥ ८ ॥

द्वादशे नित्यनिरयप्राप्तिरुक्ता समर्थिता ।
हरिद्विषामाह दुःखरूपतां नरकस्य तु ॥ ९ ॥

त्रयोदशे स्वतंत्रत्वचिंतासाधनमेव तु ।
फलेनेत्यवदत् सूत्रकृन्नये तु चतुर्दशे ॥ १० ॥

ततोऽधतमसस्यातिदुःखमात्रत्वमाह सः
षोडशे भूमादिभावाभावमाह स कर्मणाम् ॥ ११ ॥

नये सप्तदशे गर्भवासादिप्राप्तिमाशु सः ।
स्वर्गादवाग्गतस्याह व्रीह्यादित्वं न कर्मिणः ॥ १२ ॥

इत्याहाष्टादशनये त्यक्तस्वर्गस्य कर्मिणः ।
पितृप्रवेशस्तूपांत्ये साधितो हरिणा नये ॥ १३ ॥

योनिप्रवेशेनेह देहावाप्तिमाह नये हरिः ।
चरमे विंशति नयाः तृतीयाद्य इतीरिताः ॥ १४ ॥

भक्तिपादः

तृतीयस्य द्वितीयांघ्रौ विष्णुमाहात्म्यमीरितम् ।
मत्युत्पत्यर्थमस्यादौ स्वप्नस्रष्टृत्वमीरितम् ॥ १ ॥
तत्तिरोधायकत्वं तु द्वितीयेऽभिहितं हरेः ।
जाग्रत्प्रवर्तकत्वं तु तृतीयेऽभिहितं नये ॥ २ ॥
तुर्येऽधिकरणे तस्य मुक्तप्राप्यत्वमीरितम् ।
पंचमेऽभिहितं सुप्तबोधकत्वं हरेर्नये ॥ ३ ॥
षष्ठे सार्वजनीनानामवस्थानां तु सर्वशः ।
प्रवर्तकत्वमीशस्य नये सूत्रकृतेरितम् । ॥ ४ ॥
अर्धप्राप्यत्वमुक्तं स ह्योमावस्थाने सप्तमे
जीवेनेशस्याष्टमे तु निर्दोषगुणपूर्णताम् ॥ ५ ॥
अभिन्नत्वं च सर्वत्र हरेः सूत्रकृदब्रवीत् ।
तस्याप्राकृतदेहत्वं जगाद नवमे नये ॥ ६ ॥
भेदाभेदाभावमाह दशमे जंतुना हरेः ।
स्वरूपाभिव्यक्तिरूपफलं भक्तेर्हरेर्नये ॥ ७ ॥
एकादशेऽवदद्भक्तितारतम्यं तदुत्तरे ।
त्रयोदशेऽवदद्विश्वपालकत्वं हरेर्नये ॥ ८ ॥
आत्मप्रसादैकसाध्यमापरोक्ष्यं रमेशितुः ।
इत्यर्थमाह भगवान् नये व्यासश्चतुर्दशे ॥ ९ ॥
नये पंचदशे प्राह गुणित्वं जगदीशितुः ।
अलौकिकत्वमवदत् तद्गुणानां तु षोडशे ॥ १० ॥

कादिकादिगुणौघस्य व्यासः सप्तदशे नये ।
कादिकादिगुणाभासभावमाह जगत्प्रभुः ॥ ११ ॥

प्रागुक्ताव्यक्ततामेव श्रीशस्य समसीषधत् ।
अष्टादशे नये व्यासः सर्वकर्तृत्वसाधनम् ॥ १२ ॥

स उपान्त्यनये चक्रे नयेऽन्त्ये फलदातृताम् ।
आहैकविंशति नयाः तृतीयस्य द्वितीयके ॥ १३ ॥

उपासनापादः

तृतीयस्य तृतीयांघ्रावुदितोपासना हरेः ।
आद्ये नये सर्वशास्त्रश्रुतिमत्योश्च कार्यता ॥ १ ॥

समर्थिता सूत्रकृता हरेः सार्वत्रिकान् गुणान् ।
उपसंहृत्य तध्यानं द्वितीये कार्यमाह सः ॥ २ ॥

तृतीये तूपसंहारानुपसंहारायोर्नये ।
युक्तत्वं कर्तृभेदेन तूपसंहृतिकार्यताम् ॥ ३ ॥

तुर्ये फलादिकत्वोक्त्या प्राह सर्वाधिकारिणाम् ।
साधारणं गुणोपास्तिनिर्णयं प्राह पंचमे ॥ ४ ॥

प्राह प्रियशिरस्त्वादेः षष्ठे सर्वानुपास्यताम् ।
सप्तमे त्वमरादीनां बहुसद्गुणचिंतनम् ॥ ५ ॥

उक्तोपसंहृत्यनुपसंहृत्योर्मानमष्टमे ।
नये जगाद प्रागुक्तचतुर्गुणविचिंतनम् ।
नवमे साधयामासानुपसंहारमानताम् ॥ ६ ॥

प्रागुक्तामात्मशब्दस्य दशमे समसीषधत् ।
एकादशेऽलौकिकानां गुणानां ध्येयतोक्तिता ॥ ७ ॥

नये सूत्रकृता वाण्याः क्रियाणामुपसंहृतिः ।
न विशिष्य गुणानां वा किंतु सामान्यतश्च सा ॥ ८ ॥

इत्यर्थं द्वादशे प्राहानुपसंहारमानताम् ।
आत्मशब्दाच्चेति सूत्रप्रोक्तामात्मपदस्य तु ॥ ९ ॥

नये समर्थयामास वेदव्यासस्त्रयोदशे ।
संभृत्यादिगुणानां स प्राह सर्वानुपास्यताम् ॥ १० ॥

चतुर्दशे पंचदशे गुणानामुपसंहृतिः ।
कार्येति सर्वशः प्राह कर्माद्याद्यनुपास्यताम् ॥ ११ ॥

वेधादेः षोडशे प्राह मुक्तावप्यस्तितोदिता ।
हर्युपास्तेः सप्तदशे नियतिः कर्मणां कृतेः ॥ १२ ॥

अष्टादशे तु मुक्तानां ब्रह्मसूत्रकृतोदिता ।
तदयुत्तरनये मोक्षनैयत्यं ब्रह्मदर्शिनाम् ॥ १३ ॥

उपासनाधिकारस्य नियमं तारतम्यतः ।
तदुत्तरनये प्राह ततः प्राणावमानताम् ॥ १४ ॥

उपासकानामवदत् प्राणादुत्तमतां हरेः ।
ततः प्राह हरेरेव प्राणादुत्तमतां ततः ॥ १५ ॥

उपासनेऽधिकारस्य भावः संसाधितः श्रियः ।
चतुर्विंशे नये तेन श्रवणादित्रयस्य च ॥ १६ ॥

कर्तव्यतां प्राह नये पंचविंशे तदुत्तरे ।
प्रीत्या गुरूपदेशाख्यमुपास्तेरंगमाह सः ॥ १७ ॥

ततो गुरुप्रसादस्य साधनेषु बलिष्ठताम् ।
पूर्वप्राप्तादन्यगुरोः स्वीकार्यत्वं ततोऽवदत् ॥ १८ ॥

ज्ञानस्यैव ततः प्राह सूत्रकृन्मुक्तिहेतुताम् ।
तदुत्तरनये तेन सैवाक्षिप्य समर्थिताम् ॥ १९ ॥
तदुत्तरे दर्शनस्य प्राह भक्त्यादिकार्यताम् ।
तारतम्यं दर्शनस्य तदुत्तरनयेऽब्रवत् ॥ २० ॥
बिंबज्ञानस्य सन्मुक्तिहेतुत्वं तु तदुत्तरे ।
भक्तेर्यद्दृष्टिहेतुत्वं स्वातंत्र्येण तु तन्न च ॥ २१ ॥
इत्युत्तरनये प्राह त्वैक्यमंशांशिनोस्ततः ।
ब्रह्माद्यंगसुरोपास्तेः कार्यतामाह तूत्तरे ॥ २२ ॥
आह सर्वोपास्यतां तु ततो भूमगुणस्य तु ।
तारतम्येनैव सर्वोपास्यतां तु तदुत्तरे ॥ २३ ॥
ततो बिंबोपासनस्य विकल्पेनैव कार्यताम् ।
काम्यविध्योक्तरूपाणां गुणानामप्युपासनम् ॥ २४ ॥
विकल्पेनैव कर्तव्यमित्याह तदुत्तरे ।
हीश्वरांगाश्रितत्वेन ब्रह्मादीनामुपासनम् ॥ २५ ॥
कार्यं दैवैरिति प्राहोपांत्ये तु भगवान् नये ।
नयांते प्राह देवान्यैरुक्तोपास्तेरकार्यताम् ।
चत्वारिंशद् द्वौ च नयात्तृतीयस्य तृतीयके ॥ २६ ॥

ज्ञानपादः

तृतीयस्य चतुर्थेऽष्टौ ज्ञानसामर्थ्यमीरितम् ।
आद्ये ज्ञानस्य सर्वार्थसाधनत्वमुदीरितम् ॥ १ ॥
नये द्वितीये तद्ज्ञानं न समस्ताधिकारिकम् ।
इत्याह तारतम्यस्य सत्तामाह तृतीयके ॥ २ ॥

ज्ञानाधिकारे तुर्ये तु विशेषं ज्ञानिनोऽवदत् ।
सद्सत्संप्रवृत्तिभ्यामाह पंचमके नये ॥ ३ ॥

ब्रह्मज्ञानस्याधिकारिमात्रप्राप्यत्वमाह सः ।
ब्रह्मज्ञानस्य देवानां पदानाकांक्षिभिर्नरैः ॥ ४ ॥

प्राप्यत्वमाह षष्ठे तु ज्ञानं सन्निधिमात्रतः
अस्वामिनोऽपि फलदमिति सप्तमकेऽवदत् ॥ ५ ॥

आधिक्यमष्टमे ज्ञाने विशेषादधिकारिणाम् ।
गतीनामाह सर्वेभ्यो नवमे त्वतिगोप्यताम् ॥ ६ ॥

ज्ञानस्याह परोक्षस्य दशमे सूत्रकृन्नये ।
आहसाधनसंपत्तिजन्मन्येवोदयं दृशेः ॥ ७ ॥

अभावे प्रतिबंधस्य स्वोदयादुत्तरक्षणे ।
ज्ञानं मुक्तिप्रदातृ स्यात् प्रतिबंधो भवेन्न च ॥ ८ ॥

इति प्राह नयेंऽत्ये तु भगवान् सूत्रकृद्धरिः ।
तृतीयस्य तुरीयेंऽष्टौ नया एकादशेरिताः ॥ ९ ॥

॥ इति श्रीब्रह्मसूत्राधिकरणरत्नमालायां सुधींद्रयतिकृतायां तृतीयोऽध्यायः ॥

## चतुर्थोध्यायः (फलाध्यायः)

### कर्मक्षयपादः

उक्त्वाऽथब्रह्मजिज्ञासापदार्थान् लक्षणैस्त्रिभिः ।
तुर्येऽतः पदबोध्यस्य मोक्षस्याह स्वरूपकम् ॥ १ ॥

कर्मक्षयोत्क्रांतिमार्गभोगरूपस्य लक्षणे ।
कर्मक्षयं तु प्रथमे प्राधान्येन न्यरूरुपत् ॥ २ ॥

प्राथम्याद्भगवान् पादेऽस्त्यवश्यंभावि साधनम् ।
न्यरूरुपत् सप्तनय्यां श्रुत्याद्यावृत्तिकार्यताम् ॥ ३ ॥

आदावाह नये तत्राऽऽत्मत्वोपास्तेर्द्वितीयके ।
नित्यशः कार्यतामाह तृतीये तु न्यावारयत् ॥ ४ ॥

विष्णुप्रतीकयोरैक्योपास्तिं तुर्ये नयेऽब्रवीत् ।
आवश्यकत्वं ब्रह्मत्वोपास्तेः पंचम आह सः ॥ ५ ॥

स्वास्वाश्रयांगकत्वेन श्रीशोपास्तेः सुकार्यताम् ।
सुरैः षष्ठे तु नियममासनादेरुपासने ॥ ६ ॥

ध्यानस्य प्रायणांतत्वं सप्तमेऽसाधयन्नये ।
प्रासंगिकं समाप्यैवमीश्वराधिगमाध्द्रुवम् ॥ ७ ॥

कर्मक्षयाभिधफलसिद्धिरित्यष्टमेऽवदत् ।
तुरीयस्याद्यचरणे नया अष्टौ समीरिताः ।
देवानां स्वोच्चदेवेषु लयमुत्क्रांतिमाह च ॥ ८ ॥

उत्क्रांतिपादः

तुरीयस्य द्वितीयांघ्रौ वाचो मनसि संलयम् ।
आदावाह नये प्राणे लयं तस्य द्वितीयके ॥ १ ॥

वाणीपतेर्लयं त्वीशे नये प्राह तृतीयके ।
लयं मुक्तान्यदेवानां पंचभूताभिमानिषु ॥ २ ॥

चतुर्थे तु नये प्राह सर्वभूतेषु पंचमे ।
समर्थितः सुराणां तु लयः षष्ठे श्रियो हरौ ॥ ३ ॥

लयाभावः सूत्रकृता परमात्मनि संलयम् ।
विरिंचेतरदेवानां सप्तमे हरिरब्रवीत् ॥ ४ ॥

मुक्तानां हर्यधीनत्वं नये त्ववददष्टमे ।
देवानां लयमुक्त्वैवं मनुष्यज्ञानिनामथ ॥ ५ ॥

विलक्षणोत्क्रांतिमन्योत्क्रांतितो नवमेऽवदत् ।
आवश्यकत्वमंते तु विद्याया गत्यनुस्मृतेः ।
प्राह द्वितीये चरणे तुरीयस्य नया दश ॥ ६ ॥

३. मार्गपादः

उत्क्रांतानां तु यः पंथाः प्राप्तौ तेन पथा हरेः ।
गतानाममराणां च यद्गम्यं तद्द्वयं प्रभुः ॥ १ ॥

तुरीयस्य तृतीयांघ्रौ सूत्रकृत् संन्यरूरुपत् ।
तत्र विष्णुप्राप्तिमार्गे आदावर्चिष आदिताम् ॥ २ ॥

नये वायो द्वितीये तु तदानंतर्यमाह हि ।
तृतीये प्राप्यतामाह तडितो वत्सरात् परम् ॥ ३ ॥

आतिवाहिकतामाह तुर्ये त्वर्चिरनंतरम् ।
प्राप्य वायोर्मुख्यवायोरंतिमत्वं तु पंचमे ॥ ४ ॥

नये ब्रह्मप्राप्तिमार्गे सूत्रकृत् समसीषधत् ।
एवं मार्गं संविचार्य पंचनय्या श्रुतीश्वरः ॥ ५ ॥

कृष्णो गम्यस्वरूपं तु नये षष्ठे न्यरूरुपत् ।
तुरीयस्य तृतीयेंऽघ्रौ नयाः षडिति कीर्तिताः ॥ ६ ॥

४. भोगपादः

चतुर्थस्य चतुर्थेंऽघ्रौ चतुर्वक्त्रेण केशवम् ।
गतानां सह यो भोगस्तं व्यासः संन्यरूरुपत् ॥ १ ॥

ब्रह्मानतिक्रमेणैव मुक्तानां प्रथमे नये ।
भोगानुभवमाहेशो ब्रह्मप्राप्याविहाय तत् ॥ २ ॥

भुञ्जानस्याखिलान् द्वितीये त्वाह मुक्तताम् ।
ज्योतिषो मुक्तगम्यत्वं ब्रह्मत्वं तु तृतीयके ॥ ३ ॥

सायुज्यभाजां तुर्ये तु श्रीशसंभुक्तभोक्तृताम् ।
निरस्य देहविरहप्रयुक्तां भोक्तृतां हरिः ॥ ४ ॥

मुक्तस्य भोक्तृतामाह सूत्रकृत् पंचमे नये ।
मुक्तस्य संकल्पमात्रसाध्यभोगित्वमब्रवीत् ॥ ५ ॥

षष्ठेऽधमनियम्यत्वराहित्यं सप्तमेऽवदत् ।
निराह मुक्तसंभोगानुपपत्तिं नयेऽष्टमे । ॥ ६ ॥

भोगेयत्तां तु मुक्तस्य नवमे प्राह सूत्रकृत्
वृद्धिर्ह्रासश्च नेत्याह भोगादेर्मुक्तसंततेः । ॥ ७ ॥

दशमे पुनरावृत्तिं मुक्तानामंतिमे नये ।
अवदद्भगवान् व्यासः श्रीश(:)सज्ज्ञानसिद्धये ॥ ८ ॥

तद्वाक्यपद्मसौरभ्यं व्यञ्जयन् मध्वमारुतः ।
तापानपाहरत् स्वानां कृपापूरः सुशीतलः ॥ ॥ ९ ॥
तुर्याध्यायतुरीयांघ्रौ नया एकादशेरिताः ।
एवं षोडश पादेषु मेलने खरशो नयाः ॥१०॥ (२२२)

॥ इति श्रीमद्ब्रह्मसूत्राधिकरणरत्नमालायां श्रीसुधींद्रयतिविरचितायां चतुर्थोऽध्यायः समाप्तः ॥

इति श्रीसुधींद्रतीर्थकृता ब्रह्मसूत्राधिकरणरत्नमाला

॥ श्रीकृष्णार्पणमस्तु ॥

# 6. श्रीधीरेंद्रयतिविरचितः विषयवाक्यसंग्रहः

## I प्रथमाध्यायः (समन्वया)

### प्रथमः पादः

श्रीमदानंदतीर्थार्यहृदयांभोजवासिनः ।
श्रीरामकृष्णव्यासश्रीहयास्यान् प्रणमाम्यहम् ॥ १ ॥

श्रीमध्वतंत्रव्याख्याकृज्जयराजार्यपूर्वकान् ।
श्रीराघवेंद्रवादींद्रवसुधेंद्रान् नतोऽस्म्यहम् ॥ २ ॥

श्रीव्यासो ब्रह्ममीमांसां चक्रे सूत्रगणात्मिकाम् ।
सा चतुर्लक्षणी तत्र चत्वारः प्रतिलक्षणम् ॥ ३ ॥

पादाः प्रसिद्धा द्वाविंशत्यधिकद्विशतं नयाः ।
तत्र सर्वाधिकरणेषु भाष्यटीकास्फुटान्यपि ॥ ४ ॥

वक्ष्ये विषयवाक्यानि तदुक्त्या ज्ञापितान्यहम् ।
विजिज्ञासस्वेति वाक्यं जिज्ञासानयगं स्मृतम् ॥ ५ ॥

जन्माधिकरणस्योक्तं तद्ब्रह्मेति तदुत्तरम् ।
यतो वेत्यादि तत्पूर्वं शास्त्रयोनिनयस्य च ॥ ६ ॥

समन्वयस्यौपनिषदः पुरुष इत्यादिकस्तथा ।
नावेदविच्चेति वाक्यद्वयं विषयदर्शकम् ॥ ७ ॥

नामानि सर्वाणि यमाविशंतीत्यादिकं तथा ।
इहेक्षतिनये गम्यं टीकादौ विषयोक्तितः ॥ ८ ॥

अंतरात्माऽऽनंदमय इत्यानंदमये नये ।
उपलक्षणयाऽऽनंदमयशब्द उदाहृतः ॥ ९ ॥

अंतःप्रविष्टं कर्तारमित्यंतःस्थनयस्य तु ।
आकाश इति होवाचेत्याकाशाख्यनयस्य तु ॥ १० ॥

तद्वै त्वं प्राणोऽभव इति प्राणनयस्य हि ।
आद्यज्योतिर्नयस्येदं ज्योतिरित्युदितं वचः ॥ ११ ॥

गायत्री वा इदं सर्वं गायत्र्यधिकृतेरपि ।
चक्षुः श्रोत्रं मनः प्राण इति प्राणनयेंऽतिमे ॥ १२ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे प्रथमाध्यायस्य प्रथमः पादः ॥

## द्वितीयः पादः

सर्वभूतेष्वेतमिति (वाक्) सर्वत्रप्रसिद्धके ।
सर्वं वा अत्तीति वाक्यमत्ताधिकरणस्य तु ॥ १ ॥

ऋतं पिबंतावित्याद्यं गुहाधिकरणीयकम् ।
य एषोंऽतरक्षिणीति त्वंतर्नयगतं वचः ॥ २ ॥

एष त आत्मांतर्यामीत्यंतर्यामिनयस्य हि ।
अदृश्यत्वनये यत्तदद्रेश्यमिति भाषितम् ॥ ३ ॥

यस्त्वेतमेव प्रादेशमात्रमित्यादिकं वचः ।
वैश्वानरनयस्यैतद्विषयप्रतिपादकम् ॥ ४ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे प्रथमाध्यायस्य द्वितीयः पादः ॥

## तृतीयः पादः

यस्मिन् द्यौः पृथिवीत्येतद् द्युभ्वाद्यायतने नये ।
यो वै भूमेति यद्वाक्यं भूमाधिकरणस्य तु ॥ १ ॥

एतद्वैतदक्षरं गार्गीत्यंतरनयस्य च ।
सदेव सौम्येति यद्वाक्यं सन्नये विषयार्पकम् ॥ २ ॥
दहरं पुण्डरीकं वेश्मेत्याद्यं दहरे नये ।
तदेतदिति मन्यंत इत्याद्यनुकृतौ नये ॥ ३ ॥
अंगुष्ठमात्रमित्यादि शब्दादेवेति सन्नये ।
विश्वे देवा इति वचो देवतानयगं मतम् ॥ ४ ॥
पठेद्वेदानिति वचो ह्यपि शूद्रनये मतम् ।
महद्भयं वज्रमिति वाक्यं कंपनसन्नये ॥ ५ ॥
प्राणे ह्यंतरिति ज्योतिर्दर्शनके नये ।
आकाशोऽर्थांतरत्वादि ह्याकाशे च प्रसिद्धवाक् ॥ ६ ॥
स यत्तत्रेत्यादि वाक्यमसंगत्वनयस्य हि ।
महिमा ब्राह्मणस्येति वचः पत्यादिशब्दके ॥ ७ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे प्रथमाध्यायस्य तृतीयः पादः ॥

## चतुर्थः पादः

महतः परमव्यक्तमिति वागानुमानिके ।
वसंते ज्योतिषेत्यादिनये ज्योतिरुपक्रमे ॥ १ ॥
संख्योपसंग्रहनये पंच पंचजना इति ।
आकाशाद्वायुरित्येतत् कार्यकारणसन्नये ॥ २ ॥
सर्वे वेदा इति वचो समाकर्षनयस्य तु ।
सैषा प्रकृतिरित्याद्यं वाक्यं तु प्रकृतौ नये ॥ ३ ॥
एतेन सर्वे व्याख्याता इत्यध्यायांतिमे नये ।
असदेवेति तुच्छेनेत्याद्यं विषयदर्शकम् ॥ ४ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ प्रथमाध्यायः (समन्वयाध्यायः) समाप्तः ॥

# II द्वितीयोऽध्यायः (अविरोधाध्यायः)

## प्रथमः पादः

यतो वा स हि सर्वस्य कर्तेत्यादि स्मृतेर्नये ।
सर्वे वेदा इति वचो नविलक्षणता नये ॥ १ ॥

मृदब्रवीदाप इती त्यभिमानिनये वचः ।
यतो वा असदेवेदमित्याद्यं चाप्यसन्नये ॥ २ ॥

स हि सर्वस्य कर्तेति भोक्त्रापत्तिनयस्य तु ।
स इदं सर्व मसृजते त्यारंभणके नये ॥ ३ ॥

यतो वेत्युक्तमितरव्यपदेशनयस्य च ।
श्रुतेस्तु शब्दमूलत्वादित्यत्रापि तदेव हि ॥ ४ ॥

प्रयोजनाधिकरणे वैषम्यादिनये च तत् ।
गुणाः श्रुता इति वचः सर्वधर्मोपपत्तिके ॥ ५ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे द्वितीयाध्यायस्य प्रथमः पादः ॥

## द्वितीयः पादः

स हि सर्वस्य कर्तेति नये सांख्ये त्वनीश्वरे ।
एको वशी यतो वेति सेश्वरे सांख्यके नये ॥ १ ॥

यतो वेत्यादिकं लोकायतिकादि नयत्रये ।
गुणाः श्रुताऽनंतगुणाः इति वैशेषिके नये ॥ ३ ॥

अणुपुंजवादादिष्वापादांतनयेष्वपि ।
यतो वे त्यादि कर्तृत्वबोधकं विषयार्पकम् ॥ ३ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे द्वितीयाध्यायस्य द्वितीयः पादः ॥

## तृतीयः पादः

वियन्नयस्य चाकाशः संभूत इति तद्वचः ।
आकाशाद्वायुरित्येतन्मातरिश्वनये स्फुटम् ॥ १ ॥

असंभवस्त्वसति नये तद्ब्रह्मेत्युक्तमत्र च ।
तेजोऽत इत्यधिकृते वायोरग्निरितीरितम् ॥ २ ॥

अग्नेराप इति ह्येतत् आप इत्युदिते नये ।
पृथिव्यधिकाररूप नयेऽद्भिः(द्भ्यः) पृथिवीति च ॥ ३ ॥

यत्प्रयंती त्यादिवाक्यं तदभिध्यानके नये ।
विपर्ययेणेति नये भूतानीति क्रमादिति ॥ ४ ॥

तद्यच्छेद्ज्ञान इत्याद्यमंतरेत्यादिके नये ।
नाऽऽत्मा श्रुतेरिति नये नित्यानां नित्यतावचः ॥ ५ ॥

सर्वे एते चिदात्मानः इति ज्ञोऽत नये वचः ।
वागणुह्येष आत्मेति ह्युत्क्रांत्यादिनयस्य तु ॥ ६ ॥

स पंचधेत्यादि वाक्यं व्यतिरेकनयस्य हि ।
द्वा सुपर्णेत्यादिवाक्यं पृथगुपदेशाह्वये नये ॥ ७ ॥

यावदात्मेत्यधिकृतौ स नित्य इति तद्वचः ।
विज्ञानात्मेति पुंस्त्वादिवत्त्वस्येति नयस्य हि ॥ ८ ॥

यत्कर्म कुरुतेत्यादिजीवकर्तृत्वसन्नये ।
वस्तुतो ज्ञोऽत एवेत्याद्या पादांतनयेऽपि सः ॥ ९ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे द्वितीयाध्यायस्य तृतीयः पादः ॥

## चतुर्थः पादः

स इदं सर्वमित्याद्यं तथा प्राणा इतीरिते ।
सर्वेंद्रियाणीति च नये तत्प्राक्श्रुतेरिति ॥ १ ॥

वागुत्पत्तिनये प्राणसंख्या व्याप्तिनये च तत् ।
स प्राणमात्मत इति श्रेष्ठश्चेति नयस्य तत् ॥ २ ॥

चक्षुरादिवदित्यत्र प्राणः परवशेति वाक् ।
प्राणा वावेत्यादिवाक्यं पंचवृत्त्याह्वये नये ॥ ३ ॥

अणुश्चेति नये वाक्ये प्राचीनप्राणवाचकम् ।
तानी ह वेति वा ज्योतिराद्यधिष्ठानके नये ॥ ४ ॥

त इंद्रियाणीति नये प्राणा वेत्यादिकं वचः ।
संज्ञामूर्तेः क्लृप्तिनये नामरूपादि सृष्टिवाक् ॥ ५ ॥

मांसादि भौममित्यत्र तासां त्रिवृतमित्यदः ।
टीकायां विषयवाक्यानि संगृहीतानि तानि वै ॥ ६ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे द्वितीयाध्यायस्य चतुर्थः पादः ॥

# III तृतीयाध्यायः

## प्रथमः पादः

ब्राह्मणो निर्वेदमिति तदंतरनयस्य हि ।
त्र्यात्मकत्वादिति नये वेत्थैवेति च वाग्द्वयम् ॥ १ ॥

यद्वा तदंतरनये वैराग्यादि प्रसाधनं (प्रबोधकम्) ।
त्र्यात्मकत्वत् प्राणगतेरिति वेत्थेति वाग्द्वयम् ॥ २ ॥

अग्निं वागप्येति वातमित्यग्न्यादिगतिश्रुतेः ।
प्रथमे श्रवणं वेत्थेत्यश्रुतत्वादिके च तत् ॥ ३ ॥

भाक्तं वेत्यत्र वैराग्यपूर्वसाधनबाधकम् ।
कृतात्ययनये भूतैर्गच्छतीत्यादि वाङ्मतम् ॥ ४ ॥
यथा तमेव पुनर्गच्छत्यागच्छतीति च ।
चरणादित्यत्र तथाऽनिष्टादिकारिणामपि ॥ ५ ॥
संयमनेत्यपि सप्तत्या तत्रापीत्यनयोर्मतम् ।
अथैतयोः पथोर्नैकेति विद्याकर्मणोर्नये ॥ ६ ॥
न तृतीये तथेत्यत्र यातयाम इतीत्यपि ।
भूत्वेत्यादिकं तत्स्वाभाव्यापत्तिके नये ॥ ७ ॥
नाति चिरेणेति तत्र ततः शेषेण चेति वाक् ।
अन्याधिष्ठित इत्यस्मिन्निति व्रीहियवा इति ॥ ८ ॥
तद्य इह शुभकृतः रेतःसिग्योगिके त्विति ।
योनेः शरीरमित्यत्र स्मृतियोग्य इतीरितम् ॥ ९ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे तृतीयाध्यायस्य प्रथमः पादः ॥

द्वितीयः पादः

स्वप्नायैवेत्यादि संध्ये सृष्टिराह नये मतम् ।
वेदनांतरमित्याद्यं पराभिध्यानके नये ॥ १ ॥
जागरितस्थान इति देहयोगादितीरिते ।
नाडीषु सुप्त इत्याद्या तदभाव इतीरिते ॥ २ ॥
अतः प्रबोध इत्यस्मिन् यदा जीवः प्रबुध्यते ।
स एवेत्यधिकृतौ स स्वप्न इति वा मतम् ॥ ३ ॥
मुग्धेऽर्धसम्पत्तिनये मोहादिप्रतिपादके ।
दक्षिणानि मुखेत्यादि मतं न स्थानतो नये ॥ ४ ॥

अरूपवन्नये रुग्मवर्णं चानंतमात्रकम् ।
अत एव चोपमेत्यादावंबुवदग्रहणे नये ॥ ५ ॥

वृद्धिह्रासादिका चैव यस्य देवेति भक्तिवाक् ।
य उ त्रिधात्विति वचः प्रकृतैतावतानये ॥ ६ ॥

भक्तिरेवैनममियाति तदव्यक्तनये तथा ।
उभयव्यपदेशाख्ये यस्य देवेति वा वचः ॥ ७ ॥

परमतस्सेत्वित्यत्र सत्यज्ञानादिवाचकम् ।
एतस्य ब्रह्मण इति स्थानवैशेष्यके नये ॥ ८ ॥

तथान्यत्प्रातिषेधाख्ये ब्रह्मोपास्वेति वाङ्मतम् ।
स इदं सर्वमसृजतेत्यनेनेति च सन्नये
एष ह्येवेत्यादि फलमत इत्यादिके नये ॥ ॥ ९ ॥

॥ इति श्रीश्रीरेंद्रयतिकृते विषयवाक्यसंग्रहे तृतीयाध्यायस्य द्वितीयः पादः ॥

## तृतीयः पादः

सर्ववेदांताधिकृतौ सर्वे वेदा इतीरितम् ।
सर्वैश्च वेदैरित्याद्यमुपसंहारके नये ॥ १ ॥

सर्वैर्गुणैरेक आत्मेत्येवेति च द्वयं (मतम्) ।
प्राप्तेश्चेति नये चायं सर्वाभेदनये तथा ॥ २ ॥

आनन्दादय इत्यत्र सत्यज्ञानादिवाचकम् ।
नये प्रियशिरस्त्वाख्ये एतस्य प्रमितीरितम् ॥ ३ ॥

अन्येषु तु यथायोगं इतरे त्वर्थसाम्यके ।
सर्वैरितिप्रागुपिते त्वाध्यानायेति सन्नये ॥ ४ ॥

विज्ञानमानंदमिति गुणास्त्वात्मगृहीतिके ।
आत्मेत्येवेत्युक्तवाक्यमन्वयादिति सन्नये ॥ ५ ॥

एष नित्यो महिमेति कार्याख्यानादपूर्वके ।
समान एव वेत्यत्र लौकिकेत्यादिकं मतम् ॥ ६ ॥
न वा विशेषादित्यत्र चात्मेत्येवेति वाग्भवेत् ।
संभृतिद्युव्याप्तिरेव सर्वे उक्षार इत्यपि ॥ ७ ॥
पुरुषविद्यायामाम्नानेऽपीत्यत्र सर्वैर्गुणैरिति ।
अग्रे त्वचं विध्य मर्मन्निति वेधादिके मतम् ॥ ८ ॥
हानौ तूपायनेत्यत्रोपासनादिविधायकम् ।
तमेवं विद्वानमृतः छंदतोभयसन्नये ॥ ९ ॥
पूर्वोक्तमेवानियमः सर्वेषामिति चोदिते ।
तं तथोपासते यावदधिकारमवस्थितौ ॥ १० ॥
नामप्राणाद्यंतवाक्यमियदामननादिति ।
व्यतिहारनये विष्णोर्यं सत्यैवेतिवादिनी ॥ ११ ॥
सत्यादयः स वै हीति प्राणो वावेति वाङ् नये ।
महतोऽव्यक्तमित्याद्यं कामादित्यादिके नये ॥ १२ ॥
श्रोतव्यमित्याद्यखिलं तन्निर्धारणपूर्वके ।
प्रदानवदिति ह्यत्र तदैत्र विषयार्पकम् ॥ १३ ॥
लिंगभूयस्त्वतस्तद्धीत्यत्र चाचार्यवानिति ।
आचार्याद्धीत्युक्तमेतत् पूर्ववैकल्पिके नये ॥ १४ ॥
ब्रह्मोपास्वेत्यादि वाक्यं विद्यैव त्विति सन्नये ।
श्रुत्यादिबलवत्वाच्चेत्यादावमृतमित्यदः ॥ १५ ॥
अनुबंधादिभ्य इति दृश्यतेत्यादिकं वचः ।
प्रज्ञांतरपृथक्त्वेति ब्रह्मोपासाविधायकम् ॥ १६ ॥

न सामान्यादपीत्यत्र दृष्टश्चैवेत्यादि दृष्टिवाक् ।
परेण शब्दस्येत्यत्र भक्त्या दर्शन वाङ् मतम् ॥ १७ ॥

व्यतिरेकस्तद्भावेत्यत्रोपास्त्यादिविधायकम् ।
अंगावबद्धास्त्वित्यत्रात एवात्मानमेव च ॥ १८ ॥

भूम्नः क्रतुवादित्यत्र यो वै भूमेति विश्रुतम् ।
तदेव नानाशब्दादिभेदादित्यत्र चोदितम् ॥ १९ ॥

विकल्प इत्याधिकृतौ नृसिंहादेरुपास्तिवाक् ।
आवहंतीत्यादिवाक्यं काम्यास्त्विति नये मतम् ॥ २० ॥

ब्रह्मा शिरसि चेत्याद्यमंगेष्वित्यत्र संमतम् ।
नवेत्यत्र तदेव स्यात् टीकादौ विषयोक्तितः ॥
भावदीपे न्यायमुक्तावल्यादौ च तथोक्तितः ॥ २१ ॥

॥ इति श्रीश्रीरिंद्रयतिकृते विषयवाक्यसंग्रहे तृतीयाध्यायस्य तृतीयः पादः ॥

चतुर्थः पादः

तमेवमित्यादिवाक्यं पुरुषार्थनयस्य हि ।
तदेवासार्वत्रकीति ज्ञानादेवेति वाग् भवेत् ॥ १ ॥

नाविशेषादिति पठेद्वेदानर्थानितीरितम् ।
स्तुतयेऽनुमतिर्वेति स ब्राह्मण इति स्फुटम् ॥ २ ॥

सर्वथाऽपि तु त एवेत्यस्य तमेतं दृश्यतेति च ।
न चाधिकारिकमिति न देवेत्यादिकं वचः ॥ ३ ॥

ब्रह्मविदाप्नोति परमित्याद्यं स्वामिनः फले ।
कृत्स्नभावाधिकरणे कुटुंबीत्यादिकं वचः ॥ ४ ॥

एतां मनुष्येष्वित्याद्यमनाविष्कृणके नये ।
नये त्वैहिकमित्यादावात्मा वाऽरेति दृष्टिवाक् ॥ ५ ॥

एवं मुक्तिफलेच्छेत्यत्र ब्रह्मसंस्थामयं त्विति ।
उद्धृतान्येव वाक्यानि टीकायां विषयोक्तितः ॥ ६ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे तृतीयाध्यायस्य चतुर्थः पादः ॥

॥ इति तृतीयाध्यायः (साधनाध्यायः) ॥

## ॥ चतुर्थोऽध्यायः ॥

### प्रथमः पादः

श्रोतव्य इत्यादिवाक्यमावृत्तेरसकृन्नये ।
आत्मानमेवेति वचः आत्मेति त्विति सन्नये ॥ १ ॥

न प्रतीके नहीत्यत्र नाम ब्रह्मेति च स्मृतम् ।
ब्रह्मदृष्टिनये ब्रह्म पूर्णमित्यादिकं वचः ॥ २ ॥

चक्षोः सूर्योऽजायतेति ह्यादित्यादि मते नये ।
उपविश्यासनेत्याद्यमासीनः संभवादिति ॥ ३ ॥

सर्वदैनमुपासीतेत्यादि प्राणनयेऽपि हि ।
विद्वानतिमृत्युमेतीत्याद्यं कर्मक्षये नये ॥ ४ ॥

॥ इति श्रीधीरेंद्रयतिकृते विषयवाक्यसंग्रहे चतुर्थाध्यायस्य प्रथमः पादः ॥

### द्वितीयः पादः

वाङ्मनसि दर्शनादित्यत्र वाङ्मनसीति वाक् ।
तन्मनः प्राण इत्यत्र मनः प्राणेति वाङ्मतम् ॥ १ ॥

ब्रह्मप्रापयितृत्वशक्तेः । 'वायुरेव ब्रह्म गमयति तस्य ह्येषा शक्तिः । न ह्यन्यो ब्रह्म गमयति प्रियो ह्येनद्गमयति । न ह्यन्यः प्रियो ब्रह्मणः' इति श्रुतेः । मार्गे त्ववरस्यापि यथामार्गं पश्चात् प्राप्तिर्भवति लोकवत् । न हि राजानं यःकश्चित् प्रापयति क्लृप्तमतिप्रियं चाप(ति)हाय ॥ ॥ ५ ॥

न च चतुर्मुख(स्य)मुक्तिपर्यन्तं सन्ततत्वनियमाद्बन्धस्य तावद्भगवत्प्राप्तिर्नास्तीति नियमः ।

'यान्ति देवं परं केचित् पूर्वं केचिल्लये विभुम् ।
योग्यतातारतम्येन विशेषोऽयमपीष्यते ॥'

इति श्रुतेस्तथाप्राप्तत्वात् । न च परब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वेन प्रथमप्राप्तत्वादपोहायुक्तेस्तस्यैव प्राप्तिनियमः । 'यान्ति देवं परं केचि'दिति प्रमाणप्राप्तत्वादेव । न च परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियमः ।

'क्रमानुरागी भगवान् क्रमात् पुंभिरवाप्यते ।
अतः क्रमात् समृद्धे तु ज्ञाने ब्रह्मलये नरैः ।
प्राप्यते नियमेनैव कैश्चिदेवाप्यते मृतौ ॥'

इति भगवतः क्रमानुरागित्वश्रुतेः । न च बहुधाश्रुतेर्यथासौकर्यं चतुर्मुखस्य परस्य वा प्राप्तिरिति वाच्यम् । श्रुत्युक्तानुवृत्तेरेव न्याप्यत्वात् । 'सप्रतीकाश्चतुर्मुखमप्रतीकाः परममुहैते गच्छन्त्यागच्छन्ति च चतुर्मुखात् परमं पराच्चतुर्मुखं यावद्विलयमथ सह चतुर्मुखेन विमुच्यन्ते आनन्दिनो भवन्ती'ति हि श्रुतिः । अन्तर्भेदाधिकरणत्वात् समुदायोक्तिः ॥ ॥ ६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

।। हरिः ॐ ।। न चैतं सेतुं तीर्त्वेत्यत्रातिक्रमोक्तेर्मुक्तो ब्रह्म तीर्त्वा गच्छति । तरतीति सामान्यप्रतीतेर्ब्रह्म तीर्त्वा गच्छतीति विशेषोक्तेश्चैतं सेतुं प्रत्यन्यत्तीर्त्वेत्यन्यथोपपत्तेः ।। ।। १ ।।

न च कृतिमत्त्वादमुक्त एवोच्यते । 'स तत्र पर्येति'त्यादौ 'स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तस्य स्पष्टं प्रतिभातत्वाच्छ्रुतौ । स तत्र पर्येतीति श्रुत्यैक्यप्रतीतेश्चैवंभूतस्यापि प्रकरणत्वं प्रकल्प्य श्रुति-बाधाङ्गीकारे सा श्रुतिरप्येवं विभज्य किं योजायितुं न शक्यते' इति श्रुतेरेवाभावप्रसंगः । सत्यं ज्ञानमित्यादावपि सत्यमित्यस्यान्यमित्य-नेनान्वय इत्यादिप्रसङ्गात् ।। ।। २ ।।

न च परंज्योतिः शब्देनादित्यज्योतिरङ्गीकारे 'स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्त' इत्यादिनैकार्थतेति प्रयोजनम् । 'अथ किमुच्यते परं ज्योतिरित्यात्मैव परंज्योतिः स हि परमो द्योतते जीवाच्चाजीवाच्च तस्मादाहुः परं ज्योतिरिति तमेवैष जीवोऽभिसम्पद्य स्वेन रूपेणाभि-निष्पद्यते' इति तस्यैव परंज्योतिष्ट्वोक्तेः । सावकाशलिङ्गान्निरवका-शश्रुतेरेव (अति)बलवत्त्वात् ।। ।। ३ ।।

न च परमगतित्वादीश्वराभुक्ता अपि भोगा मुक्तौ भवन्ति । ईश्वरस्य स्वत एव पूर्णानन्दत्वादभोगस्यापि सम्भवादिति वाच्यम् ।

पूर्णानन्दः पूर्णभुक् पूर्णकर्ता पूर्णज्ञानः पूर्णभाः पूर्णशक्तिः ।
पूर्णैश्वर्याद्भगवान् वासुदेवो विरुद्धशक्तिर्न च दोषस्पृगीशः ।।'

इत्याश्चर्यतयैव ब्रह्मण उभयोक्तेः । सावकाशोपपत्तिमात्रान्निरवकाश-श्रुतियुक्तोपपत्तेरेव बलवत्त्वात् ।। ।। ४ ।।

न च पारङ्ग(ग)तत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति वाच्यम् । अकृत्रिमत्वात् तस्य देहस्यानपगमात् । 'अथ विमुक्तस्य

चिन्मात्र एव देहो भवति चिन्मात्राणि करणानि तैरीशानुगृहीतैर्भोगान् भुङ्क्ते' इति श्रुतेः ॥ ॥ ५ ॥

न च भगवदोकसि स्थितत्वान्मुक्तस्य तस्याप्योकस्त्वसाम्येन तत्तदुपायसाध्यभोगसाधनत्वं वाच्यम् । निर्दोषत्वात् तदोकसो मुक्तस्य च संकल्पादेवेति (युक्ता)श्रुत्यनुसारेणोपपत्तेः ॥ ॥ ६ ॥

न च परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशते । निर्दोषत्वादेव मुक्तस्येश्वरस्य तत्रस्थानां मुक्तान्तराणां (च) राजदोषवद्दोषासम्भवाद्यथायोग्यमेव स्वीकारोपपत्तेः ।

'मुक्तानां पतयो देवा देवानां च प्रजापतिः ।
तस्य विष्णुर्न चैवेदं पारावर्यं विनश्यति ॥'

इति (च) श्रुतिः ॥ ॥ ७ ॥

न च देहभावे तत्कार्यदुःखादिस्तदभावे भोगासम्भव इति दोषः ।

'देहाभावाच्च भावाच्च निर्भोगित्वं च दुःखि(ख)ताम् ।
यान्त्यमुक्ता नोभयं च मुक्तानां वशिता यतः ॥'

इति श्रुत्यैव विशेषक्लृप्तेः ॥ ॥ ८ ॥

न च संकल्पादेव समस्तसम्भवात् सृष्ट्यादिसमस्तकार्यसम्भवः ।

'व्यापारो जगतो विष्णोर्मुक्तानां तु स्वभोगगः ।
न हि स्वर्णं शुद्धमपि वह्निकार्यकरं भवेत् ।
अयोग्याशक्तितस्त्वेव नाधिकानन्दसम्भवः ।
न हि कश्चित् सुशक्तोऽपि चकाराचेतनं चितिम् ।
न च कामस्तथा भूयात् ततः स्यात् सत्यकामि(म)ता ॥'

इति श्रुत्या विशेषक्लृप्तेरेव ।

'मुक्तानां न जगद्यतस्तथाऽपि विबुधाः सदा ।
मुक्तानां तु नियन्तारस्तेषां ब्रह्माऽस्य वै हरिः ॥'

इति च विशेषक्लृप्तिः ॥ ॥ ९ ॥

न च वशित्वान्मुक्तस्यापि वृद्धिः । कृतकृत्यत्वेन निःश्रमत्वादुपासनादावभ्यासपाटवान्निर्दोषत्वात् स्नेहाधिक्याच्च तस्यैव परमसुखरूपत्वेन फलस्वरूपात्(रूपत्वात्) ।

'अभ्यासपाटवात् स्नेहादश्रमत्वादुपासना ।
भक्तिश्च सुखरूपैव मुक्तानां न तु साधनम् ॥'

इति (च) श्रुतिः ॥ ॥ १० ॥

न चानन्तत्वात् कालस्य त्रयोदशीपञ्चदशीवत् (कदाचित्) समस्तस्यापि सम्भवान्मुक्तस्यापि पुनरावृत्त्याशङ्केति वाच्यम् । सत्यकामत्वादिमाहात्म्यात् ।

'अशेषकामसत्यत्वान्मुक्तानां न (म)पुनर्भवः ।
यस्मात् स कामयेदेव नित्यमात्मापुनर्भवम् ॥'

इति च श्रुतिः ॥ ॥ ११ ॥

इत्यनन्तमहान्यायमीमांसापारवारिधेः ।
उत्तारणात्यशक्त्यैव व्याकुलीभू(कृ)तचेतसाम् ॥
मन्दानामुपकाराय महतां चोच्छ्रितात्मनाम् ।
तद्विशेषपरिज्ञानप्रदीप्तार्काभचेतसाम् ॥
विशेषगाढे मनसि नितरामुपकारकः ।
न्यायप्लवो मयाऽकारि सङ्क्षेपात्प्र मिताक्षरैः ॥
विस्त(ा)रोऽप्ययमेव स्यात् तद्विशेषातिवेदिनाम् ।
व्याख्यानुव्याख्ययोरेव विस्त(ा)रो यदुदीरितः ॥

अनल्पचेतसां पुंसामलं विज्ञानसिद्धये ।
तन्न्यायोद्धरणे(ऽ)शक्ता अपि ह्येतेन सुस्थिरम् ॥

न्यायानुगं मनः कुर्युरि(र)तिसंग्रहलालसाः ।
को नामाशेषविद्योरुसागरोन्मथनोद्धृतम् ॥

साक्षाद्विद्याधिराजेन न्यायामृतमनुत्तमम् ।
अशेषतोऽधिगच्छेत वन्द्यो वृन्दारकोऽपि सन् ॥

एवं सुदुर्लभेऽप्यद्धा महान्यायपरामृते ।
केचनाधिक्रियन्तेऽत्र(च) तत्प्रसादानुरञ्जिताः ॥

ब्रह्माद्या अमृते यद्वत् सागरोन्मथनोद्धृते ।
अहं तु तत्प्रसादैकमहास्पदबलोद्धृतः ॥

न्यायामृतार्णवमिममवगाह्य विभज्य च ।
सङ्क्षेपविस्तराभ्यां च चक(ा)र व्याकृतिं कृतिम् ॥

तत्प्रसादमृते कस्य शक्तिः संसारसागरे ।
मग्नस्य चेतनस्य स्यात् तत्कृतानुकृतौ क्वचित् ॥

नित्यानन्दामृतस्यन्दितत्कटाक्षै(क्षे)धितस्य तु ।
का नु शक्तिर्भवेन्नैव ततः कोवाऽतिविस्मयः ॥

विद्याऽविद्ये सुखं दुःखमशक्तिः शक्तिरेव च ।
उत्पत्तिस्थितिनाशश्च विशेषाश्च(ा)परेऽखिलाः ॥

चेतनाचेतनस्यास्य समस्तस्य यदिच्छया ।
स मम स्वकृतेनैव प्रीयतां पुरुषोत्तमः ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचो नयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

नमोऽज(ब्ज)*भवभूर्यक्षपुरःसरसुराश्रय ।
नारायणारणं मह्यं मापते प्रेयसां प्रिय ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे चतुर्थाध्यायस्य चतुर्थः पादः ॥

## ॥ इति सन्न्यायविवृतिः (न्यायविवरणम्) ॥

॥ श्रीकृष्णार्पणमस्तु ॥

## ॥ इति ब्रह्मसूत्रवैभवम् ॥

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥



* ( ) एतच्चिह्नांतर्गतपाठाः प्रायः हृषीकेशतीर्थीयाः ।

परिशिष्टम्

# 1. ब्रह्मसूत्रभाष्यादिसूत्रसंबंधिग्रंथानामाद्यन्तश्लोकाः

## १. श्रीमदानंदतीर्थभगवत्पादकृतं ब्रह्मसूत्रभाष्यम्

आ. नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥ १ ॥

अं. ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे ।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥ २ ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥ २ ॥

नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥ ३ ॥

## २. श्रीमदानंदतीर्थभगवत्पादकृतं अनुव्याख्यानम्

आ. नारायणं निखिलपूर्णगुणैकदेहं
निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वंद्यं सदा प्रियतमं मम सन्नमामि ॥ १ ॥

अं. निःशेषदोषरहितकल्याणाखिलसद्गुण ।
भूतिस्वयंभुशर्वादिवंद्य त्वां नौमि मे प्रियम् ॥ २ ॥

# 2. श्रीजयतीर्थीयटीकाः

## १. तत्त्वप्रकाशिका (भाष्यटीका)

अं. शुद्धानंदोरुसंविद्द्युतिबलबहुलौदार्यवीर्यादिदेहं
चिन्तासंतापलेपोद्भवमृतिमुखराशेषदोषातिदूरम् ।
सद्भिर्वैराग्यभक्तिश्रुतिमतिनियतध्यानजज्ञानयोगाद्
गम्यं वन्दे मुकुन्दाभिधममलमलं ब्रह्म वेदान्तवेद्यम् ॥ १ ॥

याञ्चामन्दरलोलिताद्यत उदैद्भिर्येन्दिरा निर्जरै-
र्जातो भारतपारिजातसुतरुः सद्ब्रह्मसूत्रामृतम् ।
आसीत् तन्त्रपुराणसन्मणिगणो जातः शुकेन्दुः सदा
सोऽयं व्याससुधानिधिर्भवतु मे भूत्यै सतां भूतिदः ॥ २ ॥

स्वांतध्वांतनिकृन्त(कर्त)ने जितमहावैकर्तनांशुव्रजं
निर्दोषं जितचन्द्रचन्द्रिकमलं तापत्रयोन्मूलने ।
गाम्भीर्ये जितसिन्धुराजममितं भाष्यं यदास्याम्बुजा-
दाविर्भूतममन्दबोधभगवत्पादान् प्रपद्येऽथ तान् ॥ ३ ॥

श्रीमध्वसंसेवनलब्धशुद्धविद्यासुधाम्भोनिधयोऽमला ये ।
कृपालवः पङ्कजनाभतीर्थाः कृपालवः स्यान्मयि नित्यमेषाम् ॥ ४ ॥

श्रीमद्रमारमणसद्गिरिपादसङ्क्विव्याख्यानिनाददलिताखिलदुष्टदर्पम् ।
दुर्वादिवारणविदारणदक्षदीक्षमक्षोभ्यतीर्थमृगराजमहं नमामि ॥ ५ ॥

अथ तत्कृपया ब्रह्मसूत्रभाष्यं यथामति ।
व्याकुर्वे श्रीमदानन्दतीर्थार्यमुखनिःसृतम् ॥ ६ ॥

गङ्गासङ्गेन नैर्मल्यं रथ्याद्भिर्लभ्यते यथा ।
वाचो विशुद्धिसिद्ध्यर्थं संगम्यन्ते गुरोर्गिरः ॥ ७ ॥

अं. उत्पत्तिस्थितिसंहृतिप्रभूतयो भावा भवन्त्याज्ञया
पद्मापद्मभवादिसर्वजगतो व्यस्ताः समस्ताः सदा ।
यस्यागण्यगुणाकरस्य करुणापीयूषवारांनिधेः
सोऽयं दूरनिरस्तदोषनिकरः प्रीतोऽस्तु नारायणः ॥ ८ ॥

अगाधबोधैर्विवृतातिभावभाष्यानुवादेन न मेऽपराधः ।
न हीन्दिराराध्यपदो मुकुन्दो दूर्वाङ्कुरैर्मन्दधनैरपूज्यः ॥ ९ ॥

मध्वदुग्धाब्धिसंभूतभाष्येंदूदितकौमुदी ।
भूयात् सत्कुमुदानंददात्री तत्त्वप्रकाशिका ॥

## २. न्यायसुधा (अनुव्याख्यानटीका)

श्रियःपत्ये नित्यागणितगुणमाणिक्यविशदप्रभा-
जालोल्लासोपहतसकलावद्यतमसे ।
जगज्जन्मस्थेमप्रलयरचनाशीलवपुषे
नमोऽशेषाम्नायस्मृतिहृदयदीप्ताय हरये ॥ १ ॥

येन प्रादुरभावि भूमिवलये व्यस्तारि गोसंततिः
प्राबोधि श्रुतिपंकजं करुणया प्राकाशि तत्त्वं परम् ।
ध्वांतं ध्वंसमनायि साधुनिकरश्चाकारि सन्मार्गगः
तेन व्यासदिवाकरेण सततं मा त्याजि मे मानसम् ॥ २ ॥

व्याप्तिर्यस्य निजे निजेन महसा पक्षे सपक्षे स्थितिः
व्यावृत्तिश्च विपक्षतोऽथ विषये सक्तिर्न वै बाधिते ।
नैवास्ति प्रतिपक्षयुक्तिरतुलं शुद्धं प्रमाणं स मे
भूयात् तत्वविनिर्णयाय भगवानानंदतीर्थो मुनिः ॥ ३ ॥

भवति यदनुभावादेडमूकोऽपि वाग्मी
जडमतिरपि जंतुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतोदेवता भारती सा
मम वचसि निधत्तां सन्निधिं मानसे च ॥ ४ ॥

रमानिवासोचितवासभूमिः सन्न्यायरत्नावलिजन्मभूमिः ।
वैराग्यभाग्यो मम पद्मनाभतीर्थामृताब्धिर्भवताद्विभूत्यै ॥ ५ ॥

पदवाक्यप्रमाणज्ञान् प्रतिवादिमदच्छिदः ।
श्रीमदक्षोभ्यतीर्थाख्यानुपतिष्ठे गुरून् मम ॥ ६ ॥

श्रीमदानंदतीर्थार्यसन्मनःसरसीभुवि ।
अनुव्याख्याननलिने चंचरीकति मे मनः ॥ ७ ॥

न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा
न च न्याये प्रौढा न च विदितवेद्या अपि वयम् ।
परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं प्रपन्ना
मान्याः स्मः किमपि च वदंतोऽपि महताम् ॥ ८ ॥

यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।
न क्षमंते विमतयस्तमुपासे श्रियःपतिम् —II ॥ १ ॥

कुपिताहिफणच्छायासमीकृत्यापरं सुखम् ।
सेवंते यत्पदं धीरास्तं भजे वल्लभं श्रियः —III ॥ १ ॥

यदीयचरणांभोजच्छायामाश्रित्य निर्वृताः ।
नंदंति संततं मुक्ताः संश्रये तं श्रियःपतिम् —VI ॥ १ ॥

वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता ।
भ्रियतां सदये हृदये कमलामहिलेन पूरुषेण ॥ १ ॥

न वैदुष्यभ्रान्त्या न च वचनचातुर्यकुधिया
न मात्सर्यावेशान्न च चपलतादोषवशतः ।
परं श्रद्धाजाड्यादकृषि कृतिराचार्यवचसि
स्खलन्नप्येतस्माज्जगति न हि निंद्योऽस्मि विदुषाम् ॥ २ ॥

अनुव्याख्यामृतांबोधेः समुत्पन्नाऽतिनिर्मला ।
इयं न्यायसुधा भौमैर्विबुधैः सेव्यतां सदा ॥ ३ ॥

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृते-
रनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृतौ
चतुर्थेऽध्यायेऽस्मिन् चरणमचरणः पर्यवसितः ॥ ४ ॥

## ३. सन्न्यायविवृति (न्यायविवरण)टीका

आ. जयंति जातकीभर्तुश्चरणांभोजरेणवः ।
नमत्सुरकिरीटस्थान् ये मणीनतिशेरते ॥ १ ॥

दुरंतदुरितध्वांतविध्वंसनपटीयसे ।
बादरायणसंज्ञाय परस्मै महसे नमः ॥ २ ॥

नमामि श्रीमदानंदतीर्थाचार्यं परं गुरुम् ।
यस्य वाणी कृपाणीयं निकृंतति भवाटवीम् ॥ ४ ॥

प्रणम्य चरणांभोजे गुरूणां तत्कृपाबलात् ।
सन्न्यायविवृतिव्याख्यां करिष्यामि यथामति ॥ ४ ॥

# 3. प्राचीनटीकाः

## १. श्रीपद्मनाभतीर्थविरचिता सत्तर्कदीपावलिः

आ. निर्दोषं गुणपूर्णं च ज्ञेयं गम्यं रमापतिम् ।
श्रीमदानंदतीर्थाख्यं वंदे सर्वविदं गुरुम् ॥ १ ॥

प्रसन्नमपि गूढार्थं भाष्यं तत् सन्मनोहरम् ।
व्याख्यास्ये लेशतो भक्त्या गुरुदेवप्रसादतः ॥ २ ॥

## २. श्रीपद्मनाभतीर्थविरचिता सन्न्यायरत्नावलिः

आ. नारायणमसंख्येयकल्याणगुणविग्रहम् ।
वंदे भक्त्या सदा ध्वस्तदूषणं परमप्रियम् ॥ १ ॥

नमो भगवते तस्मै व्यासरूपाय विष्णवे ।
यत्प्रसादात् परं ज्ञानं प्राप्यते विबुधादिभिः ॥ २ ॥

श्रीमदानंदतीर्थाख्यान् गुरून् विद्यादिवाकरान् ।
वंदे कुदृष्टिदुर्बोधव्याससिद्धांतदीपकान् ॥ ३ ॥

तत्कृतां ब्रह्मसूत्राणामनुव्याख्यां यथामति ।
विवृणोम्यर्थगंभीरां हरितत्त्वप्रकाशिकाम् ॥ ४ ॥

अं लक्ष्मीनारायणौ वंदे तयोर्यो भक्तिमत्तमः ।
श्रीमदानंदतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ १ ॥

ईशाय नारायणसंज्ञकाय जन्मादिकर्त्रे जगतो नमोऽस्तु ।
व्यासाभिधानाय तथा गुरुभ्योऽप्यानंदतीर्थाभिधया युतेभ्यः ॥ २ ॥

श्रीपद्मनाभयतिसिंधुसमुत्थितेयं सन्न्यायरत्नपरमावलिरुज्वलाऽलम् ।
भूयादशेषसुजनौघसुखैकहेतुः सूत्रानुभाष्यपददीपनदीपरूपा ॥ ३ ॥

अशेषकल्याणगुणौघहेतुर्हरिः सुखात्माऽखिलदोषदूरः ।
भक्त्या प्रपन्नस्य सुखैषिणः सदा करोत्वभीष्टं हि रमासहायः ॥ ४ ॥

## ३. त्रिविक्रमपंडिताचार्यकृता तत्त्वप्रदीपिका

पूर्णज्ञानं विपुलपरमानन्दसंदोहदेहं
भक्तप्रीत्या कृतविवरणब्रह्मसूत्रावतारम् ।
श्रीमन्नारायणपदमहं ध्वस्तनिःशेषदोषं
वन्दे नित्यं गुरुमपि गुरोरागमार्थप्रकाशम् ॥ १ ॥

यस्याम्नायपदाक्षराणि परमं स्वार्थं लभन्ते गुणान्
संप्रोच्यैव सुबृंहितानि बलवन्न्यायेतिहासादिभिः ।
तं सेव्यं मुनिभिः प्रशान्तमनसा भक्त्या भवच्छित्तये
स्वानन्दप्रदमिन्दिरापतिमहं भूयोऽभिवन्दे हरिम् ॥ २ ॥

अस्यन्विशेषाद्भजतो भवौघाद्व्यस्यन् नृगादींश्च विशिष्ट आस ।
सोऽयं हरिर्व्यासपदाभिधेयः संप्रीयतां सत्यवतीसुतो मे ॥ ३ ॥

जिह्वासूल्लसिता सतां प्रतिपदं तत्त्वप्रतिद्योतिका
नृत्यन्ती परमेरितैव परमा वागीश्वरी श्रीः स्वयम् ।
यस्यास्यादुदिताऽखिलागमवपुः सत्सूत्रभूषामणिः
सर्वज्ञात् कवयश्च पुष्करभुवो जाता यदीयेच्छया ॥ ४ ॥

यः सर्वजीवनविबोधविचेष्टिनेशो
देव्याश्च वाङ्मयतनोरखिलार्चितायाः ।
नाथः सदा हरिमहागुणदृष्टितृप्त-
स्तस्मै नमो भगवते परमानिलाय ॥ ५ ॥

ये वै पुरा जगति शार्ङ्गभृताऽमुना च
देवेन भीमगदया हतबाहुवीर्याः ।
देवद्विषां मतिरभून्मनुजेषु तेषां
वाग्योधनेन भगवद्गुणदूषणाय ॥ ६ ॥

संरम्भतः श्रुतिषु विष्णुपरासु गूढा-
द्विद्वेषतः परगुणेषु महत्सु गाढात् ।
वेदान्तवादकपटैरतिदुष्टवाचां
मायाविनां निरसने स कृतावतारः ॥ ७ ॥

सोऽयं गुणामृतमहाब्धिरिहावतीर्ण
आनन्दतीर्थभगवान् परमो गुरुर्मे ।
यत्पादपद्मरजसा शिरसा धृतेन
सद्यः प्रयान्ति परिशुद्धिमशेषलोकाः ॥ ८ ॥

यस्याद्यानां मुनीनां सततहरिगुणध्यानशिक्षायमाणा
वादीन्द्रामत्तनागप्रमितिबलतिरस्कारसिंहायमाना ।
सर्वज्ञस्य श्रुतीनामखिलजनमनोध्वान्तसूर्यायमाणा
व्याख्या विख्यातकीर्तेर्जयति सुमनसां कर्णपूरायमाणा ॥ ९ ॥

येनैकान्तयतात्मनामृजुवरेणाचार आचार्यवान्
संन्यासेन निजा स्वयं प्रकटिता निःसङ्गता संसृतौ ।
श्लाघ्यः पारमहंस्य आश्रमवरो यच्छीलगङ्गाजल-
स्नातो व्यक्तमयोग्यसङ्गमभुवो दोषात् पुनर्मोक्षितः ॥ १० ॥

लेशेनोद्भासितांशां भुवि मनुजमतिं वीक्ष्य विज्ञानशक्तिं
शास्त्रव्याख्यां च चित्रां प्रविततयशसः प्राश्निकानां प्रसङ्गे ।
यस्य स्तोतुं प्रवृत्ताः प्रवरगुणमयीं प्रस्खलन्त्या स्ववाचा
प्राज्ञाः प्रोद्यत्प्रमोदप्रचुरभरनमत्साश्रुकण्ठा भवन्ति ॥ ११ ॥

तस्यास्य चारुचरणप्रणतिं प्रपन्ना
गोभिर्विधूनतमसः सुनयामृतानाम् ।
उद्गारिणीभिरिह सद्गुणराजभावं
विप्रा व्रजन्ति विशदा विततभिरुच्चैः ॥ १२ ॥

स्पृष्टं करेण विषमप्यमृताय दृष्टं
यस्योदयः सभगवान् यदु राति किंचित् ।
तद्भेषजं गदवतां प्रतिक्लृप्तमायु-
र्वेदे सुसिद्धममुनेत्यविचार्यमेतत् ॥ १३ ॥

योद्धॄणां राघवार्थे कृतमहितरणो योऽद्वितीयो द्वितीयो
विष्णोः कृष्णप्रियार्थं पुनरपि विपुलैस्संयुगैर्व्यक्तकीर्तिः ।
यद्वीर्यं योधवीरैः कृतनुति जगतां सप्तके सप्तके वा
देवेऽस्मिन्जैत्रशक्तिर्निवसति सकलेत्यत्र किं विस्मयः स्यात् ॥ १४ ॥

सब्राह्मणोपनिषदो निखिलाः सुसिद्धा
वेदाः स्फुटं यदनधीतवतः स्वशाखाम् ।
यान् वै पठन्ति मुनयोऽप्यसकृद्गुरुभ्यो
वेत्तुं तदस्य महिमाऽयमचिन्त्यनीयः ॥ १५ ॥

ज्योतिः शास्त्रं यदेकं भवति भविष्यत्यतीते च साक्षात्
चक्षुः प्रत्यक्षमस्य प्रकटमपि तदाद्यङ्गषट्कं यथास्वम् ।
को ह्यस्मात् पञ्चरात्रेष्वपरिमितभिदास्तन्त्रसारप्रणेतु-
र्विद्याः पौराणिकानां बहुविधविशयच्छेत्तुरन्यः प्रवेद ॥ १६ ॥

हव्यं गृह्णाति सर्वक्रतुषु मखपतिर्योऽनुयज्ञेशमीशो
मन्त्राणां देवतानां प्रतिहृदयगतोऽप्यृत्विजां प्रेरकश्च ।

सोऽयं कर्मप्रणेता हरिगुरुविहितः कर्मणां सत्प्रयोग-
न्यायानां सूत्रजातं यदि च बुधजनैरर्थ्यते किं न कुर्यात् ॥ १७ ॥

रामक्रीडामनुविहरता पूर्वमापूर्णभक्त्या
तेन ज्ञाता न किमु विमलास्तत्कथाग्रन्थकोट्यः ।
सोऽयं रेजे कुरुषु विजयी सर्वतो भारताग्र्यो
जानीतेऽतः प्रविततमतिर्भारतार्थान् कृतार्थः ॥ १८ ॥

भाष्यन्ते ह्यपरिमिताः समस्तवेदेष्वेतेन प्रतिपदमप्रयत्नमर्थाः ।
एकैकं सुकरतरं तदेषु भाष्यं किं न स्यात्सुरवरसेवितेन तेन ॥ १९ ॥

प्रत्यक्षस्य स्वहृदि विशदे सत्यकामस्य कामात्
साक्षात्कर्तुः खलु भगवतो भ्रूनिदेशाद्द्युदेशाः ।
प्राप्ता देवैः प्रतिपदमसौ नित्यमासेवितस्तै-
स्तेषां रूपस्थितिमपि बलं वेत्ति चित्रं किमेतत् ॥ २० ॥

गन्धर्वविद्यानिपुणस्य नित्यं गन्धर्ववर्यैरनुगीतकीर्तेः ।
कलाश्च शेषा हृदये गुरोर्नः करोल्लसत्कन्दुकवद्विभान्ति ॥ २१ ॥

एवं धर्मार्थदर्शी नृपनयकुशलो न्यायवित् सुप्रमाणैः
सर्वज्ञस्तत्त्वमार्यः क्षितितलमगमत् केवलं संप्रणेतुम् ।
यस्मिन् गुह्ये स्म देवा अपि मुनिपितृभिः प्राय आलोच्य नित्यं
निष्ठां नायान्ति भूयश्चिरतरभगवद्भक्तिभिः साधयन्ति ॥ २२ ॥

त्रेधाऽवतारमवनाय सतां बलित्थे-
त्याद्या श्रुतिर्भगवती गुरुमेनमाह ।
मुख्यानिलोऽतिबलवान् मतिरीशधेना
नेतेति पृक्ष इति मध्व इति क्रमेण ॥ २३ ॥

प्रणम्य सम्यक्प्रणतेष्टदं तं व्याख्यां करोम्यद्य यथावबोधम् ।
तस्याज्ञयैवानुगृहीतबुद्धिः सत्सूत्रभाष्यस्य कृतस्य तेन ॥ २४ ॥

आज्ञस्यैनैकमप्यर्थं लेशतो वक्तुमुत्सहे ।
सहस्रार्थस्य भाष्यस्य प्रसन्नाः सन्तु सद्गुणाः ॥ २५ ॥

अं. ज्ञानानन्दादिभिर्भक्तप्रबोधानन्दनादिभिः ।
गुणैरगण्यैः पूर्णाय नमो नारायणाय ते ॥

दुःखज्ञानादिरहिता सुखज्ञानादयो गुणाः ।
सदा यस्यापरिमिताः तं नतोऽस्मि गुरोर्गुरुम् ॥

देशे काले च सर्वस्मिन् सर्वावस्थासु सर्वतः ।
यः प्रियोऽभ्यधिको विष्णुर्गुरोस्तं प्रणतोऽस्म्यहम् ॥ ॥ छ ॥

प्रणमत पदपद्मं व्यासदेवस्य विष्णो-
र्विधिमुखविबुधश्रीमौलिसङ्क्रान्तरेणु ।
गुरुरयममितार्थं यत्प्रसादैकबन्धु-
र्व्यधित परमविद्याभाष्यमीशोत्तमांशः ॥ १ ॥

त्रिजगति विलसन्तः सन्ततध्वांतमन्त-
र्द्युमणय इव दूरद्दारयन्तः समन्तात् ।
निखिलनिगमभर्तुः सूत्रकर्तुः परेशः
पदकमलपरागाः पान्तु नः पावयन्तः ॥ २ ॥

यद्वाक्प्रसारपरमामृतपानतृप्ताः
सन्तः सदा सकलदुःखरुजोऽतितीर्य ।
नित्यानुभूतिमदपारसुखैकरूपाः
क्रीडन्ति तं परमकारुणिकं नताः स्मः ॥ ३ ॥

श्रीमन्महागुरुपदाम्बुजरेणुपुञ्जैः
मूर्ध्नाऽभिषेकमधिगम्य धृतानुभावः ।
तत्त्वे सुदुर्ग इह भष्यवरस्य टीका-
माज्ञाबलादकृषि लेशत एष तेषाम् ॥ ४ ॥

सद्युक्तिरत्नरुचिरामधिरुह्य भाष्य-
निःश्रेणिमुल्बणतमस्तरणैकहेतुम् ।
लब्ध्वाऽनुभाष्यमणिदण्डकरावलम्बं
भाष्यानुभाष्यमुखतत्कृतिरत्नदीपैः ॥ ५ ॥

प्राप्य प्रकाशितमहं परमाख्यविद्या-
प्रासादवर्यसदनस्य पदारविन्दम् ।
सम्प्रीतये भगवतः परमस्य भक्त्या
सत्तत्वदीपमिमत्र समर्पयामि ॥ ६ ॥

तत्त्वाशेषविशेषदीपकतमेष्वेतेषु दीपेष्वयं
तेभ्यः सम्भृत आत्मभातवपुषः स्यात् प्रीतयेऽप्यल्पकः ।
पूर्णानन्यभुगीश्वरः सुरगणैः सम्पद्भिराऽऽराधित-
स्तुष्येत् तुष्यति चाल्पयोपहृतया भक्त्या पयोविप्लुषा ॥ ७ ॥

निःश्रेणितां निलयतां मणिदीपतां च
दीपान्तरप्रभवकारणतां च याता ।
हस्तावलम्बपदतां च तदेवमेषा
कृत्स्ना कृतिर्गुणनिधेरिह भाष्यकर्तुः ॥ ८ ॥

सर्वानुवादमिह नाकरवं प्रतीकं
नाप्यग्रहीषमलसः प्रतिभाष्यमेषः ।

तस्यापि मेऽत्रभवतश्चरणाश्रितस्य
ह्याज्ञाकृतिः सुकृतिरस्तु गुरोः कृपालोः ॥ ९ ॥

नमस्तस्मै नमस्तस्मै समस्तस्वामिनेऽस्तु ते ।
नमस्तस्मै च यस्तस्मै नमस्कर्ता गुरुः सदा ॥ १० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचित श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां त्रिविक्रमार्यकृतौ तत्त्वदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

## ४. लिकुचशंकराचार्यकृता न्यायविवरणसंबंधदीपिका

आ. स्वभक्तमातसाब्ज(ज)न्मनिकरोन्मेषहेतवे ।
विद्यांशुभिन्नतमसे नमोऽस्तु व्यासभानवे ॥ १ ॥

भाष्यादिकं कृते येन करुणोद्भावितात्मना ।
सूत्रादेः पूर्णबोधाय तस्मै श्रीगुरवे नमः ॥ २ ॥

संबंधो युक्तिमालाया भाष्याधिकरणैस्तु यः ।
हिताय मंदबुद्धीनामस्माभिः संप्रदश्यते ॥ ३ ॥

अं. मिथ्याज्ञानतमोभानुः विद्वज्जनशिखामणिः ।
गुणरत्नांबुधिर्देवोमनःकुमुदचंद्रमाः
सतां विज्ञानदानायावतीर्णो मारुतः स्वयम् ।
युक्त्यतरस्याप्युक्तेश्च विज्ञाययति स प्रभुः । ॥ १ ॥

नमो नमश्चिदानंद पूर्वपूर्णगुणात्मने ।
ब्रह्मादिभिः सदा ध्यानपादपद्माय विष्णवे ॥
नमोऽस्तु भाष्यकाराय तस्मै भगवते सदा ॥
आनंदतीर्थसन्नाम्ने सतामानंददायिने ॥ २ ॥

आनंदतीर्थभगवच्छिष्येणेयं कृता कृतिः ।
शंकरेण हरेः प्रीत्यै नाम्ना संबंधदीपिका ॥ ३ ॥



## ४. लिकुचशंकराचार्यकृता अनुव्याख्यानसंबंधदीपिका

आ. नत्वा श्रीविष्णुमानंदतीर्थं सर्वगुरूनपि ।
अनुव्याख्यानसंबंधदीपिकां प्रारभामहे ॥ १ ॥

अं. श्रीवासुदेव बहुबोधनिरोधहीनसत्तीर्थ-
कीर्तिविततान् परमान् गुरून् नः ।
.... .... .... .... .... .... .... ....
.... .... .... .... पदांबुजमध्वभक्त्यै ॥ २ ॥



## ५. श्रीनारायणपंडिताचार्यकृता नयचंद्रिका

आ. विष्णुं सम्पूर्णविज्ञानपरमानन्दविग्रहम् ।
कमलाकान्तमत्यन्तमन्तर्बहिरुपास्महे ॥ १ ॥

श्रीमन्नारायणाख्यानं सज्ज्ञानानन्दलक्षणम् ।
वेदान्तवेदितौदार्यं मुख्यं ब्रह्म प्रतन्महे । ॥ २ ॥

येन गोवर्धनछद्मछत्रेणात्रायि गोव्रजः ।
कृष्णं तमतसीकृष्णं वन्दे सौन्दर्यवारिधिम् ॥ ३ ॥

नमो वेदान्तराद्धान्तसूक्तिरत्नाकरात्मने ।
श्रीमदानन्दतीर्थाख्यभगवद्दुग्धसिन्धवे ॥ ४ ॥

त्रिविक्रमार्यवर्णाणां गुरूणां पादरेणवः ।
दिशन्तु शश्वदस्माकं शुद्धिं बुद्धेर्गिरामपि ॥ ५ ॥

तं पद्मनाभतीर्थाब्धिं पद्मनाभप्रियं भजे ।
सन्न्यायरत्नावल्याख्याद्यतो मध्वेन्दुबृंहितात् ॥ ६ ॥

अनुव्याख्यासुधाम्बोधौ गम्भीरे विहरन्ति ये ।
तेषां परहंसानां पद्मच्छायामुपास्महे ॥ ७ ॥

सन्न्यायरत्नावलयः सन्न्यायामृतबिन्दवः ।
श्रीमत्तत्त्वप्रदीपाश्च सन्तु नः शरणप्रदाः ॥ ८ ॥

श्रीमद्गुरूणां कारुण्यकल्पवृक्षसमाश्रयात् ।
अभिप्रायोऽनुभाष्यस्य यावद्बोधमनूद्यते ॥ ९ ॥

अं. मृत्या जात्याभिवृद्ध्या व्ययपरिमनव्याधिभीदुःखशोकै-
र्लोभक्रोधप्रमोहभ्रमतमविषयैः कौतुकेष्वप्रमोदैः ।
लज्जापित्तापिपासाक्षुदभिभवजरापारतन्त्र्यादिभिर्वा
दोषैरन्यैरशेषैरपि रहित सदा नौमि नारायण त्वाम् ॥ १ ॥

ऐश्वर्याद्यैस्तु षड्भिः सकलजगदभिस्रष्टृताद्यष्टरूपै-
र्भूमस्वामित्वसौख्यैः सततचितिमनौदार्यगाम्भीर्यधैर्यैः ।
स्वातन्त्र्याद्यैश्च सर्वैरमितगुणगणैः सर्वदा सर्वदेशे
सर्वोत्कृष्टैरभिन्नैर्निभृतनिजतनुं नौमि विष्णो भवन्तम् ॥ २ ॥

श्रीब्रह्मप्राणवाण्यो गतिगरुडमृडैर्वारुणीपत्रिपत्नी
रुद्राणीन्द्रेन्द्रपत्नीस्तरणिवरुणवन्ह्यादिदेवर्षिमर्त्यैः ।
वेदान्ताद्यग्र्यविद्याश्रुतिमतिवचनध्यानपूजावितानै-
र्वन्द्यं भक्त्या भवन्तं प्रतिभवमनिशं पाहि मां नौमि विष्णो ॥ ३ ॥

आस्तम्भादाम्बुजोत्थात् सकलचिदचितो नाशिनो नात्र साराः-
किन्तैः सान्तैरनन्तस्त्वमधिकदयितः सर्वतः सर्वथा मे ।
हे स्वामिन् विश्वरूपेत्यतनुतनुतं श्रीमदानन्दतीर्थ-
त्रैलोक्याचार्यदेवैर्भुवनगुरुतमैर्नौमि नारायण त्वाम् ॥ ४ ॥

समर्पयामो नयचन्द्रिकामिमां
परात्मने चन्द्रघंटामिवामलाम् ।
कृष्णार्पिताकृष्णजुषां महात्मनां
लभेत हीयं मुखवासविभ्रमम् ॥ ५ ॥

सच्छेतः कुमुदं नयेद्विकचतां सान्द्रं तमो ध्वंसये-
द्विष्णोरुन्नमयेद्दयाजलनिधिं विष्णोः पदं दर्शयेत् ।
श्रीमद्गुर्वनुकम्पयैव शरदा स्वच्छद्विजप्रेष्ठया
भातेयं नयचंद्रिका श्रितवती पूर्णानुभाष्योडुपम् ॥ ६ ॥

सच्छेमुषीकुमुदिनीं परितापहन्त्रीं
न्यायामृताब्धिमणिसागरबन्धुभूताम् ।
पूर्णानुभाष्यशशिमण्डलमण्डनाङ्गां
ग्रन्थे बबन्ध विजये नयचन्द्रिकां खे ॥ ७ ॥



## ६. त्रैविक्रमार्यदासकृता आनंदमाला (अणुभाष्यटीका)

स्वानन्दसंविन्मय मङ्गलाङ्गं निर्दोषमात्मानमनन्यरूपम् ।
ब्रह्मैकवेद्यं सकलोरुशक्तिं विष्णुं स्मरामः सततं रमेशम् ॥ १ ॥

स्वानंदतीर्थार्यसदागमान्तविद्यामहाचार्यतमान् मुनीन्द्रान् ।
निरस्तदुस्यर्कदुरागमौघान् वन्दे मुहुर्व्यासपदाश्रयांश्च ॥ २ ॥

अशेषवेदान्तकृतान्तसारव्याख्याविहारान् हरिभक्तिसिन्धून् ।
त्रिविक्रमार्यान् परमान् गुरून् मे नारायणार्यांश्च गुरून् नमामि ॥३॥

स्वानन्दतीर्थः परतत्त्वसूत्रभाष्यानुभाष्ये बहुविस्तृतार्थे ।
कुर्वंश्च तत्संग्रहमाबभाषे स्वल्पाक्षरैः स्वल्पमतेर्ग्रहार्थम् ॥ ४ ॥

अनन्तमुख्यार्थमनन्तमध्वगुरूत्तमाचार्यवरप्रसादात् ।
अत्यल्पधीस्तं विवृणोमि शक्त्या तत्पादसंसेवननित्यसिद्धयै ॥ ५ ॥

अं. यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।
दशप्रमत्याख्यतृतीयरूपी संक्षेपभाष्यं कृतवान् रमेशे ॥ १ ॥

सम्प्रीयतां तेन कृतेन सोऽयं रमापतिर्मे परमेष्टदेवः ।
विरिञ्चिवाणीविपवासवानां परात्पराणमपि यः परात्मा ॥ २ ॥

अज्ञानदुःखप्रमुखैः समस्तैर्दोषैर्विहीनाय गुणार्णवाय ।
विरिञ्चिशर्वेन्द्रमुखैरपीड्य नमो नमः श्रीरमणाय तुभ्यम् ॥ ३ ॥

सत्सौख्यविज्ञानपुरोगपूर्णगुणैकदेहाय पुमर्थदोग्ध्रे ।
अशेषवन्द्याय विशेषतो मे व्यासाय देवाय नमो नमस्ते ॥ ४ ॥

आपादतलमस्तिष्कं(कात्) निभृतानन्दचिद्घनः ।
नारायणो रमानाथो रमतां मे मनोरथे ॥ ५ ॥

नन्दयन् मन्दहासेन सुन्दरीमिन्दिरां हरिः ।
आमन्दा(मिता)नन्दनिष्यन्दी रमतां मे मनोगृहे ॥ ६ ॥

दोर्दण्डख(ण्डिता)रातिः पालयन् भुवनत्रयम् ।
आनन्द ..........................................रे ॥ ७ ॥

ज्ञानिभिर्हृदयाम्भोजे निर्मले रत्नविष्टरे।
दृष्टं निविष्टं मुख्येष्टं सन्दिदृक्षे रमेश्वरम् ॥ ८ ॥

नन्तारोऽनन्तगरुडब्रह्मरुद्रपुरोगमाः ।
यस्यामुं (नुगाः स्युस्तं) सततं देवं शुश्रूषेऽहं रमावरम् ॥ ९ ॥

सत्सूत्रनिकरार्थो यः सर्ववेदार्थबृंहितः ।
तं सद्भिः प्रोदितं सन्तं प्रविविक्षे रमापतिम् ॥ १० ॥

येनायं सकलोऽप्यर्थो भाषितोऽप्यनुभाषितः ।
प्रोदितश्चापि तं मध्वं प्राणेशं प्रणमाम्यहम् ॥ ११ ॥

विष्णोः प्रसादैकबलात् सर्वशास्त्रार्थसंग्रहम् ।
यश्चकार नमस्तस्मै पूर्णप्रज्ञाय नित्यशः ॥ १२ ॥

यत्प्रसादप्रसारेण दारुयोषेव मे मतिः ।
तट्टीकां रचयामास लेशेनापि सुदुष्करम् ॥ १३ ॥

इमामानन्दमालाख्यां स्वरूपानन्दमालिने ।
दीपमालामिवात्यल्पां जगद्दीपांशुमालिने ॥ १४ ॥

सुरैः सम्पद्भिरर्च्याय मानुषैरम्बुविप्लुषा ।
समर्पयामः पूर्णाय विष्णवे सर्वजिष्णवे ॥ १५ ॥

आ मेरोराण्डभाण्डात् सुरवरनिकरास्थानसंस्थानमान्यात्
अन्यान्यानेकविद्वत्प्रवरशतशती(शरत् )कीर्तिकर्पूरपूरात् ।
आ ग्रन्थादार्द्धवर्णाद् रथचरणधरार्थाद् विशेषैः समर्थात्
क्वासौ वादिन्द्रसिंहः पटुतम उत यः खण्डयेन्मध्वशास्त्रम् ॥ १६ ॥

आ देवादा च मर्त्याद् बहुदिवसमणेः ........प्रभायां
को वा वादीन्द्रसिंहः कविकुलतिलकः कोऽथवा मध्वशास्त्रे ।
जल्पे जाज्वल्यमानो....................पक्षपाती
जिज्ञासुर्ज्ञानसारं सकलमनु पिबेन्मानुषो वा लयब्धिम् ॥ १७ ॥

आऽब्जोत्थादा प्रधानात् सकलचिदचितो भाविताः सत्पदार्थाः
क्षुद्रार्थं वै दिशेयुः परपुरुषवशा ह्यातृणादा करीषात् ।
सर्वेषां योग्यसृष्टिस्थितिलयनियमाज्ञानदृग्बन्धमोक्षं
कुर्यादेकः स्वतन्त्रो हरिरिति सुमते(ः) तच्च शास्त्रं प्रमाणम् ॥ १८ ॥

सत्यं सत्यं तदित्थं शपथशतयुतं वच्मि हस्तावुदस्तौ
अस्तव्यस्तोक्तिरास्तां शृणुत शृणुत हे मानवा माऽवमान्य(ः) ।
स्वामी सर्वस्य विष्णुः क्वचन च सदृशो नाधिकस्तस्य हि स्यात्
सत्ये(त्यं) भातीति सत्यं श्रुतिपतिलिखिता वैजयन्ती जयन्ती ॥ १९ ॥

वन्दे विष्णुं सुरेशं स्वजनपरिवृतं तांश्च वन्दे क्रमेण
श्रीभूरूपां तदिष्टामथ विधिपवनौ तत्प्रिये वाग्धुदेव्यौ ।
पक्षीशाहीशरुद्रांस्तदुदितदयिता याः सुपर्ण्यादिसञ्ज्ञाः
शक्रादीन् काममुख्यानपि सकलसुरान् तद्गुरून् मद्गुरूंश्च ॥ २० ॥

नमस्ते श्रीशास्तु प्रियतम समस्तादपि सदा
नमस्ते प्राणेश प्रणतसुरसङ्घेष्ट शुभद ।
नमस्तद्दासा वः परमगुरवस्तत्त्वमतिदा
नमस्तद्दासा(सेभ्यः) वः पुनरिति गुरुभ्यो मुहुरपि ॥ २१ ॥



# 4. (प्रमुख) टिप्पणीग्रंथाः

## १. श्रीमद्व्यासतीर्थविरचिता तात्पर्यचन्द्रिका

अस्पृष्टदोषगन्धाय कल्याणगुणसिन्धवे ।
नमो नमो भक्तमुक्तिदायिने शेषशायिने ॥ १ ॥

शमयन् भवसन्तापं रमयन् साधुचातकान् ।
कृष्णमेघः कृपादृष्टिवृष्ट्या पुष्णातु मामपि ॥ २ ॥

श्रीमदानन्दतीर्थार्यपादपङ्कजरेणवः ।
पवित्रयन्तु मां नित्यं पापपाटनपण्डिताः ॥ ३ ॥

शारदावासवदनशारदाम्बुरुहान् मुहुः ।
पद्मनाभमुनीन् वन्दे सर्वशास्त्रविशारदान् ॥ ४ ॥

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो(मे) हृदम्बरे ॥ ५ ॥

कंसध्वंसिपदाम्भोजसंसक्तो हंसपुङ्गवः ।
ब्रह्मण्यगुरुराजाख्यो वर्ततां मम मानसे ॥ ६ ॥

पदवाक्यप्रमाणाब्धिविक्रीडनविशारदान् ।
लक्ष्मीनारायणमुनीन् वन्दे विद्यागुरून् मम ॥ ७ ॥

श्रीमद्भाष्यस्य टीका या जयतीर्थार्यनिर्मिता ।
गम्भीरा निर्मला चेमां व्याकरिष्ये यथामति ॥ ८ ॥

सूत्रे भाष्येऽनुभाष्ये च सन्न्यायविवृतौ तथा ।
टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते ॥ ९ ॥

प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोः सम्यक् विदां कुर्वंतु सूरयः ॥ १० ॥

## २. श्रीवादिराजतीर्थविरचिता (तत्त्वप्रकाशिका)गुर्वर्थदीपिका

आ. नत्वा नारायणं व्यासं हयास्यं मध्वमादरात् ।
वाणीं गुरूंश्च सकलान् कुर्वे गुर्वर्थदीपिकाम् ॥ १ ॥

अं. नमामि लक्ष्मीरमणं नमामि हयकंधरम् ।
नमामि वेदव्यासं च नमामि सुखसन्मुनिम् ॥ १ ॥
सूत्रे भाष्ये च टीकायां सूत्रोक्तश्रौतवाचि च ।
यथाशक्ति विमर्शेन प्रीयतां मे रमापतिः ॥ २ ॥
एवं गुरूणां सर्वेषां भावस्यैवं प्रकाशिका ।
वादिराजाख्ययतिना कृता गुर्वर्थदीपिका ॥ ३ ॥

## ३. श्रीवादिराजतीर्थविरचिता न्यायसुधागुर्वर्थदीपिका

आ. नारायणं हयग्रीवं व्यासं वायुं सरस्वतीम् ।
नत्वा तत्करुणासत्वाद्रमे न्यायसुधांबुधौ ॥ १ ॥
अं. इयं न्यायसुधांबोधेस्तथा भाष्यानुभाष्ययोः ।
अनुव्याख्यासंगृहीतन्यायानां विवृतिस्तथा ॥ १ ॥
गुर्वर्थदीपिका वादिराजाख्ययतिना कृता ।
आनंदतीर्थाख्यगुरोस्तथा व्यासस्य तद्गुरोः ॥ २ ॥
भारत्यास्तत्त्वदेवानां कृपया न स्वशक्तितः ।
गुणा ये त्वत्र दृश्यंते ते सर्वे तत्प्रसादतः ॥ ३ ॥
यदि संति क्वचिद्दोषास्ते मे मंदमतित्वतः ।
तदवद्यं दयाशीलैः क्षंतव्यं स्वजनप्रियैः ॥ ४ ॥
नमोऽस्तु वासुदेवाय व्यासदेवाय धीमते ।
असुदेवाय देवेभ्यो गुरुभ्यश्च नमो नमः ॥ ५ ॥

## ४. श्रीरघूत्तमतीर्थविरचित तत्त्वप्रकाशिकाभावबोधः

आ. प्रणम्य कल्याणगुणं रमेशमगाधबोधं जययोगिवर्यम् ।
गुरोर्गुरुं गुरुमार्यांश्च तत्त्वप्रकाशिकाभावमहं प्रवक्ष्ये ॥ १ ॥

अं. रघुवर्यगुरुप्रोक्तो भावो जयमुनेर्मया ।
लिखितो मंदबोधार्थं प्रीयतां श्रीपतिस्ततः ॥ १ ॥

## ५. श्रीरघूत्तमतीर्थकृता न्यायविरणभावबोधः

गुणादिसद्रत्नयुतं क्षयादिदोषोज्झितं वेदनदीभिराप्यम् ।
कृपापयस्कं हरिदुग्धवार्धिं श्रये स्वपादप्लवमुक्तगम्यम् ॥ १ ॥

सुशास्त्रप्रभया स्वस्य परेषां च प्रकाशकम् ।
भजतामिष्टदं व्यासचिन्तामणिमहं भजे ॥ २ ॥

वेदभेदविविधोरुसुशाखं बोधपूर्वकगुणाढ्यफलेतम् ।
आदरेण भजतां फलदं श्रीमोदतीर्थसुरभूरुहमीडे ॥ ३ ॥

सुगुणनरहरिश्रीमाधवाक्षोभ्यरूपान्
हरिभजननियुक्तान् शुद्धधर्मार्थकामान् ।
सुजननियमनार्थं यः प्रसाध्यापरोक्षं
स भवतु मम भूत्यै पद्मनाभाख्ययोगी ॥ ४ ॥

तारकूर्मधृतमध्वशुद्धगीर्भोगिवेष्टितसुसूत्रभूभृता ।
यो विमथ्य निगमोदधेः सुधामाप तं जयमुनीन्द्रमाभजे ॥ ५ ॥

मध्वोक्तिद्युनदीजयार्यशुभवाक्सूर्यात्मजासङ्गमे
व्याख्यास्नानमहो विधाय नृहरेः प्राप्य प्रसादं परम् ।
प्रापुर्ये कृतकृत्यतां गतमला विद्याधिराजादयो
योगीशाः कृपयन्तु ते जयमुनेर्भावस्य बोधाय मे ॥ ६ ॥

वेदव्याससरोवरे समुदिते वेदोरुनालस्थिते
मध्वोक्तिश्रिय आलये विकसिते गोभिर्जयेनस्य तु ।
सद्वाक्यादिसुपत्रपूर्वकयुते गुर्वांशुगादर्शिते
सूत्राब्जे रघुनाथमुन्यलिवरं वन्दे सुपक्षान्वितम् ॥ ७ ॥

श्रीमध्वशास्त्रं समुदीर्य मेऽस्मिन् विश्वासहेतोः समदर्शयद्यः ।
प्रदानसूत्रप्रतिपाद्यमादौ वन्दे गुरुं तं रघुवर्यसंज्ञम् ॥ ८ ॥

तत्त्वप्रकाशिकागूढं विचार्य गुरुणोदितम् ।
सन्न्यायविवृतेर्भावमुद्धरिष्ये यथामति ॥ ९ ॥

आद्याध्यायगते सार्धपूर्वपादद्वयेऽस्ति हि ।
पञ्जिका जयतीर्थीया तस्मात् त्यक्तं मयाऽत्र तत् ॥ १० ॥

अं. संपूर्णविज्ञानसुखादियुक्तो दोषोज्झितः सर्वसुमानमेयः ।
ब्रह्मादिसज्जीवगतिः परेशो नारायणः प्रीतियुतो मयि स्यात् ॥ १ ॥

तत्त्वप्रकाशिकासंस्थो मयाऽनुग्रहतो हरेः ।
सन्न्यायविवृतेर्भावो बालबोधार्थमुद्धृतः ॥ २ ॥

## ६. श्रीविद्याधीशतीर्थकृता वाक्यार्थचंद्रिका

आ. नित्यागण्यबलद्युतिप्रमितिसत्सौख्याग्र्यवीर्यातुलौ-
दार्यप्राभवधीरतामुखगुणव्रातात्मदिव्याकृतिम् ।
संतापादिसमस्तदोषविधुरं वेदैकवेद्यं जग-
ज्जन्मादिप्रदमिंदिरेश(ममलं)मनिशं नारायणं नौम्यहम् ॥ १ ॥

वेदांभोधिसमुद्धृतातिविलसत्सूत्रामृतांभोलसत्-
धारावर्षणतुष्टसद्धृदवनिज्ञानांकुराधायकम् ।
संसारातपनाशनं सुरमनःसच्चातकानंददं
वेदव्यासविचित्रमेघमनिशं मच्छ्रेयसे संश्रये ॥ २ ॥

यद्वाग्विस्तररश्मिभिर्जगदिदं सन्मार्गमालंबितं
सत्सिद्धांतवरारविंदनिवहा विस्तारमासादिताः ।
दुःसिद्धांतमहांधकारनिकरा देशांतमुल्लंघिताः
सोऽयं मध्वदिवाकरो भवतु सज्ज्ञानप्रकाशाय मे ॥ ३ ॥

सत्सूत्रान्वितमध्वभाष्यविलसद्गांडीवसंयोजितैः
सन्मानेषुभिरर्दयन् कुसमयप्रत्यर्थिदुःस्यंदनान् ।
श्रीकृष्णेरितवेदवाजिनियतश्रीमध्वशास्त्रोल्लसत्-
दिव्यस्यंदनसंस्थितो जयमुनीशाख्यार्जुनः स्यान्मुदे ॥ ४ ॥

सच्छास्त्रामलभावबोधकिरणैः संवर्धयन् मध्वसत्-
सिद्धांताब्धिमनंतशिष्यकुमुदव्रातं विकासं नयन् ।
उद्भूतो रघुवर्यतीर्थजलधेस्तापत्रयं त्रासयन्
यस्तं नौमि रघूत्तमाख्यशशिनं श्रीविष्णुपादाश्रयम् ॥ ५ ॥

श्रीमद्रामगिरींद्रपादनिरतं विद्रावयंतं दिशो
दुर्वादींद्रमहामृगान् निगमसद्व्याख्यालसन्नादतः ।
दुःशास्त्रेभकुतर्ककुंभदलनप्रौढात्मविद्यानखं
वेदव्यासमृगेंद्रराजमधिकं वंदेऽनिशं मद्गुरुम् ॥ ६ ॥

वेदांताब्धिममंदबोधगिरिणा सद्ब्रह्मसूत्राहिना
दुस्तर्केतरदानवामरगणैः सम्मथ्य यो लब्धवान् ।
सन्न्यायामृतचंद्रिके युधि तथा तर्केऽकरोत् तांडवं
सोऽयं व्यासमुनींद्रपूज्यचरणो नित्यं भवेन्मे मुदे ॥ ७ ॥

अनुव्याख्याब्धियुङ्न्यायसुधागाधसुरापगाम् ।
गुरूणां दयया शुद्ध्यै धियः सेवितुमुत्सहे ॥ ८ ॥

अं. मध्वशास्त्रार्थजलधावामग्नो जगृहे रसम् ।
तद्वृष्ट्याऽतोषयत् प्राज्ञान् गुरुमेघं तमाश्रये ॥ १ ॥

मया विरचिता न्यायसुधावाक्यार्थचंद्रिका ।
अनया भावि यत्पुण्यं तदाप्नोतु गुरुर्मम ॥ २ ॥

## ७. श्रीराघवेंद्रतीर्थकृत तत्त्वप्रकाशिकाभावदीपः

आ. I लक्ष्मीनारायणं नत्वा पूर्णबोधान् गुरूनपि ।
तत्त्वप्रकाशिकाभावदीपं कुर्यां यथामति ॥ १ ॥

तत्त्वप्रकाशिकाकूतं चंद्रिकातः प्रकाशितम् ।
अपि मंदकृते सर्वविषया च कृतिर्मम ॥ २ ॥

नूतनैरुदिता(रूहिता) ये तु दोषास्तेषामलभ्रताम् ।
संप्रदर्शयितुं चातः प्रसन्नाः संतु सज्जनाः ॥ ३ ॥

टीकागांभीर्यमाहात्म्यं मर्शं मर्शं पुरो मनः ।
नैति तद्विस्तरभयात् करोत्यग्रेसरं मतिः ॥

अं. II यत्पादपद्मे संस्मृत्य लोकोऽवद्यानवद्यति ।
तं वंदे परमात्मानं(नंदं) इंदिरामंदिरोरसम् ॥ १ ॥

III अत्यादरेण यत्पादौ त्यक्तेतरसुखस्पृहाः ।
प्राज्ञा उपासते नित्यं तमुपासे श्रियःपतिम् ॥ १ ॥

यं विजिज्ञास्य विद्वांसो निर्मुक्ताः क्लेशबंधनात् ।
लभंते परमानंदं तं वंदे श्रीनिकेतनम् ॥ २ ॥

IV सर्वेंद्रियप्रेरकेण श्रीप्राणपतिनेरितः ।
यदवोचमहं तेन प्रीणातु करुणाकरः ॥ १ ॥

## ८. श्रीराघवेंद्रतीर्थकृत न्यायसुधापरिमळम्

आ. I पूर्णागण्यगुणोदारमूर्तये पुण्यकीर्तये ।
नमः श्रीपतये भक्तदत्तस्वानंदमूर्तये ॥ १ ॥

पूर्णागण्यगुणोदारनित्यसुंदरमूर्तये ।
श्रीब्रह्मवींद्रपूर्वेड्यकीर्तिने ब्रह्मणे नमः ॥ २ ॥

विश्वं यस्य वशे सर्वमनिशं शंकरादिकम् ।
तस्य वायोस्तृतीयांशमाश्रये शमवाप्तये ॥ ३ ॥

सत्पद्मबंधवो यस्य गावो विश्वतमोनुदः ।
स स्यात् तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥ ४ ॥

पद्वाक्यप्रमाणज्ञो दुर्मतध्वांतभास्करः ।
व्यासतीर्थमुनींद्रो मे भूयात् ज्ञानसमृद्धये ॥ ५ ॥

अस्मद्देशिकपादानां प्रणम्य चरणांबुजम् ।
श्रीमन्न्यायसुधावाक्यव्याख्यां कुर्यां यथामति ॥ ६ ॥

प्रतिवाक्यं प्रतिपदमनेकाकूतकार्भिता ।
प्रतिभाति सुधाऽथापि ग्रंथाल्पत्वाय नोच्यते ॥

II भवापदो विनश्यंति यत्पादस्मृतिमात्रतः ।
तं वंदे कुमतध्वांतभास्करं नृहरिं सदा ॥ १ ॥

III आराधितः साधनैर्यो मुक्तिं दद्याच्चतुर्विधाम् ।
तं वंदे कमलानाथमभीष्टावाप्ति(प्त्यै)सिद्धये (हरिम्) ॥ १ ॥

अं. IV सर्वेंद्रियप्रेरकेण श्रीप्राणपतिनेरितः ।
यदवोचमहं तेन प्रीणातु(यतां) कमलालयः ॥ १ ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवंतां ते सुधामिमाम् ॥ २ ॥

ज्ञानब्धिरप्यवादीत् स्खलत्वं स्वात्मनस्तदा ।
मादृशानां स्खलत्वं किं वाच्यं क्षाम्यंतु तद् बुधाः ॥ ३ ॥

## ९. श्रीराघवेंद्रतीर्थकृता (अणुभाष्यटीका) तत्त्वमंजरी

आ. समस्तगुणसंपूर्णं सर्वदोषविवर्जितम् ।
लक्ष्मीनारायणं वंदे भक्ताभीष्टफलप्रदम् ॥ १ ॥

संसारक्लेशसंभ्रांतसज्जनावनतत्पराः ।
दयालवो महांतस्तान् गुरून् नत्वा गिरं भजे ॥ २ ॥

ग्रंथोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
इत्युक्तिसाम्यात् संक्षेपभाष्यं चात्यर्थविस्तरम् ॥ ३ ॥

अनंतोऽर्थः प्रकटितस्त्वयाऽणौ भाष्यसंग्रहे ।
इत्याहुः श्रीमदानंदतीर्थार्यौपसदा अपि ॥ ४ ॥

अतोऽनेकार्थयुक्तस्य नैतद्भाष्यस्य विस्तृतौ ।
शक्तोऽस्म्यथापि लेशेन व्याख्यां कुर्यां यथामति ॥ ५ ॥

सूत्रार्थं हृदि कृत्वैव भाष्यार्थं संप्रकाशये ।
अविक्षेपेण बोधार्थं बुध्यंतां तद्विवेकिनः ॥ ६ ॥

अं. पूर्णचित्सुखदेहाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्तमुक्तिप्रदायिने ॥ १ ॥

सुधींद्रगुरुशिष्येण राघवेंद्रेण भिक्षुणा ।
कृतायां तत्त्वमंजर्यामंतिमोऽध्याय ईरितः ॥ २ ॥

संक्षेपभाष्यविवृतिर्या कृता तत्त्वमंजरी ।
तया दयालुर्लक्ष्मीशः प्रीयतां मध्ववल्लभः ॥ ३ ॥

## १०. श्रीराघवेंद्रतीर्थकृता तंत्रदीपिका (ब्रह्मसूत्रार्थसंग्रहः)

आ. प्रणम्य गुणसंपूर्णं दोषातीतं रमापतिम् ।
पूर्णबोधान् गुरूनन्यान् कुर्मः सूत्रार्थसंग्रहम् ॥ १ ॥

गुरुपादकृतोऽप्यस्ति संग्रहो हृदयंगमः ।
प्रस्थानभेदप्रोक्तार्थसंग्रहोऽथाप्ययं मम ॥ २ ॥

अं. कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥ ३ ॥

अं. सुधींद्रगुरुपादानां शिष्येण श्रीशतुष्टये ।
राघवेंद्रेण यतिना कृतेयं तंत्रदीपिका ॥ ४ ॥

११. श्रीराघवेंद्रतीर्थकृता न्यायमुक्तावलिः (ब्रह्मसूत्राधिकरणसंग्रहः)

आ. प्रणम्य रमणं लक्ष्म्याः पूर्णबोधगुरूनपि ।
न्यायमुक्तावलिं कुर्मो विदुषां कण्ठभूषणम् ॥ १ ॥

अं. कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥ १ ॥

१२. श्रीराघवेंद्रतीर्थकृत तात्पर्यचंद्रिकाप्रकाशः

आ. समस्तगुणसंपूर्णं सर्वदोषविवर्जितम् ।
ज्ञानिप्रियतमं वंदे मुक्तिदं कमलापतिम् ॥ १ ॥

शर्वादिसर्वगीर्वाणनिर्वाणगतिहेतवः ।
पूर्णप्रज्ञपदांभोजपांसवः पांतु नः सदा ॥ २ ॥

विधूतदुर्मतध्वांतो विशदीकृतपद्धतिः ।
यः सज्जनानुज्जहार जयतीर्थरविं भजे ॥ ३ ॥

पदवाक्यप्रमाणज्ञान् संप्रदायार्थकोविदान् ।
व्यासतीर्थमुनीन् सेवे दुर्वादिफणिपक्षिपान् ॥ ४ ॥

अस्मद्देशिकपादानां प्रणम्य चरणांबुजम् ।
तात्पर्यचंद्रिकाव्याख्यां विधास्यामि यथामति ॥ ५ ॥

अं. निर्दोषगुणपूर्णेन श्रीप्राणपतिनेरितः ।
यदवोचमहं तेन प्रीणातु पुरुषोत्तमः ॥ १ ॥

१३. श्रीसत्यव्रततीर्थीया न्यायसुधाटिप्पणी

आ. वेदव्यासं मूलरामं नत्वा दिग्विजयं तथा ।
गुरूनपि सुधावाक्यव्याख्यां कुर्मो यथामति ॥

## १४. यदुपत्याचार्यकृता न्यायसुधाटिप्पणी

आ. सुखमुखगुणबिंबः साधुमार्गा(वादा)वलंबः
सुमतिजलजमोदो दू(भू)षितान्यप्रमोदः ।
भुवनविततमोहध्वांतविध्वंसकेहो
दिशतु दृशमभीष्टां व्याससूर्यः स्वनिष्ठाम् ॥ २ ॥

पूर्णप्रज्ञजयार्यपूर्वकगुरुनानम्य विद्याप्रदान्
वेदेशाभिधयोगिनोऽपि कृपया तेषां सुधाटिप्पणीम् ।
बालानां तनुते मितां यदुपतिर्बोधाय धीशुद्धये
स्वस्यापि प्रविचिंत्य सद्गुरुमुखात् सम्यक् श्रुतार्थान् मुहुः ॥ २ ॥

न पांडित्याभिमानेन नापि मत्सरतः क्वचित् ।
यत्नोऽयं किंतु धीवाचोविशुद्धयै मम नान्यथा ॥ ३ ॥

अं. अपारागाधश्रीजयमुनिकृतग्रंथयहृदयप्रपंचे
मे यत्नो यदपि परिहासैकफलकः ।
तथापि श्रीव्यास साल्पमतिकृपादृष्टिबलतः
कृतो यत् तेन स्यात् सकलसुजनाह्लादजनकः ॥ १ ॥

वेदेशयोगिवरमानसनीरजस्थ-
श्रीमध्वहृत्कमलवासिरमानिवासः ।
व्यासोऽस्त्वनेन जयतीर्थमुनींद्रवाक्य-
गूढाशयप्रकटनेन सदा विभूत्यै ॥ २ ॥

## १५. श्रीनिवासतीर्थीया न्यायसुधाटिप्पणी

आ. वेदव्यासं गुणावासं पूर्णबोधान् मुनीनपि ।
वंदेऽहं जयतीर्थार्यान् तथा वेदेशयोगिनः ॥ १ ॥

वेदेशमुनिसत्पादसेवासंप्राप्तवैभवान् ।
यादवार्यान् न्यायसुधाटीकाकारानहं भजे ॥ २ ॥
तत्पादाराधकश्रीनिवासेन तदनुग्रहात् ।
टीकाऽगृहीतवाक्यार्थविवृतिः क्रियते मया ॥ ३ ॥

अं. यादवाचार्यहृत्स्थश्रीमध्याचार्यहृदब्जगः ।
आनन्दादिगुणोद्रिक्तः प्रीयतां बादरायणः ॥ १ ॥
वेदेशमुनिसत्पादसेवासंप्राप्तवैभवान् ।
यादवार्यान् वरसुधाटीकाकारान् वयं नुमः ॥ २ ॥
श्रीमन्न्यायसुधाटीका यादवाचार्यनिर्मिता ।
तत्राधृतानि वाक्यानि तान्यत्र विवृतान्यलम् ॥ ३ ॥

## १६. श्रीसत्यनाथतीर्थविरचिता अभिनवचंद्रिका (त.प्र टि.)

आ. सच्चिदानंददेहाय नमः शेषांगशायिने ।
आत्मने वेदवेद्याय मुक्तगम्याय विष्णवे ॥ १ ॥

अं. सद्यो मोक्षं सतां रामचंद्राभिनवचंद्रिका ।
हस्तप्राप्तमिवातेने चतुर्थाध्यायसंगता ॥ १ ॥

## १७. श्रीरघुनाथतीर्थकृत शेषतात्पर्यचंद्रिका

आ. सत्यासक्तं मदिष्टं निखिलनिजजनव्रातरक्षैकदीक्षं
भूत्या युक्तं विशुद्धं विमतखलजनव्रातनिर्घातरूक्षम् ।
मत्या धृत्या च शान्त्या द्विजपतिकुलजं वेदविद्याप्तपक्षं
भक्त्या वन्दे त्रिरूपं हरिमनिशमहं मोक्षदानैकदक्षम् ॥ १ ॥
नानाभवगतिश्रान्तभक्तोपासकचिद्गृहम् ।
कृष्णं चेतोऽभिरामं मे वेदेशं प्रणमाम्यहम् ॥ २ ॥

सर्वज्ञाद्या गुरुवरा दुर्वादिजनदुर्धराः ।
अर्वाचीने मयि परं कुर्वन्त्वेते दयाङ्कुरम् ॥ ३ ॥

## १८. श्रीजगन्नाथतीर्थविरचिता सूत्रदीपिका

आ. कृष्णं रामं नारसिंहं व्यासं नत्वा गुरूनपि ।
जगन्नाथाख्ययतिना क्रियते सूत्रदीपिका । ॥ १ ॥

अं. मन्मानसांबुजस्थेन हरिणा चेक्षयांऽजसा ।
भूतिदायिकया कृष्णः प्रीयतां कमलालयः ॥ ॥ १ ॥

## १९. श्रीजगन्नाथयतिविरचिता भाष्यदीपिका

जिज्ञास्यं जन्मरक्षालयनियतिमतिप्रत्यगज्ञानबन्ध-
श्रेयोदं शास्त्रगम्यं श्रुतिगतवचनैर्मुख्यवृत्त्याऽभिधेयम् ।
भैष्मीसत्यासमेतं बहुगुणवपुषं भीतिपूर्वारदूरं
भक्तिश्रुत्यादिचिन्त्यं भजनपरगतिं भावये वेणुकृष्णम् ॥ १ ॥

आम्रस्तम्भात् समागत्य ताम्रतुण्डान् निहत्य यः ।
नम्रं नौमि जगन्नाथं कम्रोपात्तं नृकेसरी ॥ २ ॥

अनधीत्य महाभाष्यं यस्य व्याकृष्यनुग्रहात् ।
तमुपासे नृसिंहार्कं प्रत्यूहतिमिरापहम् ॥ ३ ॥

पूर्णबोधगुरून् वन्दे जयार्यान् व्यासदेशिकान्
रामचंद्रगुरूनार्यान् लक्ष्मीकान्तगुरूनपि । ॥ ४ ॥

येनायं निरणायि मध्वगुरुसद्भाष्यप्रकाशाशयः
प्राखण्डि प्रतिवादिदर्शनगणः प्राबन्धि गुर्वर्णवः ।
शिष्येभ्यः समदायि वित्तमुभयं प्रालम्भि विद्यासनं
सोऽयं श्रीरघुनाथतीर्थगुरुराट् शुद्धिं विदध्यान्मतेः ॥ ५ ॥

जयार्यरचितां टीकामनुसृत्य यथामति ।
जगन्नाथाख्ययतिना क्रियते भाष्यदीपिका ॥ ६ ॥

क्वचिद्भाष्यविवृत्यैव टीकार्थोऽपि विविच्यते ।
तत्त्वप्रदीपतात्पर्यचंद्रिकाद्युक्तमार्गतः ॥ ७ ॥

अं. कुशाग्रबोधैर्जयतीर्थपादैः कृतामहं व्याकृषि सूत्रभाष्यम्।
टीकां तदार्थोरुवचोऽनुसृत्य ततोऽनुवक्तुर्न भवेन्ममागः ॥ १ ॥

मन्मानसांबुजस्थेन हरिणा कृतयांऽजसा ।
भाष्यदीपिकया कृष्णः प्रीयतां कमलाकरः ॥ २ ॥

## २०. चषकः

आ. पर्यष्कारि तनुर्गुणौघमणिभिस्तत्सौषुमोत्कर्षतो
जंवानीतरतंत्रताद्यरतमः स्तोमः कदंबं विदाम् ।
स्वामोमोदि च येन विश्वजननस्थेमादिहेतुर्गिरां
सर्वस्वं मम तंतनीतु स शिवं श्रीशस्तुरंगास्यकः ॥ १ ॥

योऽश्रायि विधेंदिरया शुकेंदुना तंत्रादिरत्नैरपि भारतद्गुणा ।
सूत्रामृतेन श्रितकल्पपादपं तमद्य कानीनसुधानिधिं श्रये ॥ २ ॥

श्रीमन्न्यायसुधां भौमनिर्लिंपानां सुधित्सताम् ।
सौधं चषकमुद्दीप्तं मुदे कृष्णोऽभिधास्यति ॥ ५ ॥

श्रीनिवासार्यहृत्पद्ममंदिरो हयकंधरः
सुनंदनाच्छेवया मे भक्त्याऽलंकृतयाऽनया ॥ ६ ॥

॥ इति ब्रह्मसूत्रवैभवम् ॥

॥ **श्रीकृष्णार्पणमस्तु** ॥

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥